श्रावण महात्म्य·


सूत·
शौनक·
रवि पूजा·
शिव पूजा·
मंगळा गौरी पुजा·
बुध· बृहस्प·
देवि पूजा·
नृ·
पूजा·
नाग पू·
यज्ञोपवीत धारण·
कृष्णाजन्म·

श्रीगणेशायनमः ॥ ॥ श्रीमद्दिव्यलक्ष्मीनृसिंहायनमः ॥ ॥ शौनकउवाच ॥ ॥ सूतसूतमहाभागव्यासशिष्यमहा
मते ॥ त्वदीयवदनांभोजान्नानाख्यानानिशृण्वताम् ॥ १ ॥ तृप्तिर्नजायतेभूयःश्रवणेच्छाप्रवर्धते ॥ कार्तिकस्यचमा
हात्म्यंतुलासंस्थेदिवाकरे ॥ २ ॥ माघमासस्यमाहात्म्यंमकरस्थेदिवाकरे ॥ वैशाखमासमाहात्म्यंतथामेषगतेरवौ ॥
॥ ३ ॥ तत्रतत्रचयेधर्माःकथितासर्वशस्त्वया ॥ एतेभ्योप्यधिकःकश्चिन्मासश्चेत्तवसंमतः ॥ ४ ॥ यच्छ्रुत्वापुनरन्य
त्रश्रोतुमिच्छाननोभवेत् ॥ श्रद्धालोःश्रोतुरग्रेतुवक्तागोप्यंनकारयेत् ॥ ५ ॥ सूतउवाच ॥ ॥ शृणुध्वंमुनयःसर्वेभवतां
वाक्यगौरवात् ॥ तुष्टोहंनचगोप्यंमेभवदग्रेतुकिंचन ॥ ६ ॥ अदांभित्वंतथास्तिक्यमशठत्वंसुभक्तता ॥ ७ ॥ शुश्रूष
त्वंविनीतत्वंब्रह्मण्यत्वंसुशीलता ॥ ध्रुवत्वंचशुचित्वंचतपस्वित्वानसूयते ॥ ८ ॥ एतेद्वादशसंख्याकागुणाःश्रोतुःप्रकी
र्तिताः ॥ तेसर्वेपिभवत्स्वेवतुष्यंस्तत्त्वंब्रवीम्यतः ॥ ९ ॥ सनत्कुमारोमेधावीधर्मजिज्ञासुरानतः ॥ ईश्वरंपारिपप्रच्छभ
क्त्यापरमयायुतः ॥ १० ॥ सनत्कुमारउवाच ॥ ॥ देवदेवमहादेवयोगिध्येयपदांबुज ॥ व्रतानिबहुशस्त्वत्तःश्रुताध
र्माश्चसर्वशः ॥ ११ ॥ तथापिश्रोतुमिच्छैकावर्ततेहृदिसांप्रतम् ॥ द्वादशस्वपिमासेषुमासःश्रेष्ठतमःस्मृतः ॥ १२ ॥ त
वप्रीतिकरोत्यंतंसिद्धिदःसर्वकर्मणाम् ॥ अन्यमासेकृतंकर्मतदेवास्मिन्कृतंयदि ॥ १३ ॥ स्यादनंतफलंदेवतंमासंवक्तु

महासे ॥ तत्रत्यान्सर्वधर्मांश्चलोकानुग्रहकाम्यया ॥ १४ ॥ ईश्वरउवाच ॥ ॥ सनत्कुमारवक्ष्यामिसुगोप्यमपिसुव्रत अ० 
॥ १ ॥ ॥ शुश्रूषत्वेनभक्त्याचप्रीतोस्मिविधिनंदन ॥ १५ ॥ द्वादशस्वपिमासेषुश्रावणोमेतिवल्लभः ॥ श्रवणार्हंयन्माहात्म्यंततो १
सौश्रावणोमतः ॥ १६ ॥ श्रवणर्क्षंपौर्णमास्यांततोपिश्रावणःस्मृतः ॥ यश्चश्रवणमात्रेणसिद्धिदःश्रावणोप्यतः ॥ १७ ॥ स्व
च्छत्वाच्चनभस्तुल्योनभाइतिततःस्मृतः ॥ तत्रत्यधर्मगणनांकर्तुंकःशक्नुयात्भुवि ॥ १८ ॥ सर्वतोयत्फलंद्रष्टुंचतु
रास्याभवद्विधिः ॥ द्रष्टुंयत्फलमाहात्म्यंसहस्राक्षोभवद्वृषा ॥ १९ ॥ अनंतोयत्फलंवक्तुंसहस्रद्वयजिह्वकः ॥ किंबहूक्ते
नकोप्येतद्द्रष्टुंवक्तुंनचक्षमः ॥ २० ॥ एतत्कलामपिमुनेलभतेनान्यमासकः ॥ सर्वोव्रतमयश्चैषसर्वोधर्ममयःस्मृतः ॥
॥ २१ ॥ नकोपिवासरोयत्रव्रतशून्यःप्रदृश्यते ॥ प्रायेणतिथयश्चापिव्रतवत्योत्रमासिवै ॥ २२ ॥ अत्रोच्यतेमयायद्य
दर्थवादोनसोत्रहि ॥ आर्तैर्जिज्ञासुभिर्भक्तैस्तथार्थार्थिमुमुक्षुभिः ॥ २३ ॥ चतुर्विधैरपिजनैःसेव्यःस्वस्वेष्टकांक्षिभिः ॥
॥ सनत्कुमारउवाच ॥ ॥ भगवन्यस्त्वयाप्रोक्तोव्रतशून्योनवासरः ॥ २४ ॥ प्रायेणतिथिरप्यत्रतन्ममाचक्ष्वसत्तम ॥
कस्यांतिथौकिंव्रतंस्यात्कस्मिन्वारेचकिंव्रतम् ॥ २५ ॥ तत्रतत्राधिकारीकःकिंफलंकीदृशोविधिः ॥ केनकेनापिचा ॥ १ ॥
चीर्णंउद्यापनविधिश्चकः ॥ २६ ॥ कोदेवःकोत्रपूज्यःस्यात्सामग्रीपूजनस्यका ॥ प्रधानंपूजनंकुत्रजागरश्चापितद्वि

धिः ॥ २७ ॥ कस्यव्रतस्यकःकालस्तत्सर्वंवदमेप्रभो ॥ त्वत्प्रियश्चकथंमासःपवित्रःकेनहेतुना ॥ २८॥ मासेस्मिन्नव
तारःकःश्रेष्ठश्चायंकुतोभवत् ॥ अस्मिन्मासेचकेधर्माअनुष्ठेयावदप्रभो ॥ २९ ॥ प्रश्नेपिचकियज्ज्ञानंममाज्ञस्यतवाग्र
तः ॥ अशेषेणसमाचक्ष्वपृष्टादन्यच्चयद्भवेत् ॥ ३० ॥ जनानांतारणार्थायकृपालोकृपयावद ॥ रवौसोमेभौमवारेबुधेसु
रगुरौकवौ ॥ ३१ ॥ शनैश्चरदिनेचापितत्सर्वंवदमेप्रभो ॥ सर्वेषामादिभूतस्त्वमादिदेवस्ततःस्मृतः ॥ ३२ ॥ एकस्य
विधिबाधाभ्यामन्यबाधाविधीयथा ॥ अन्येषामल्पदेवत्वान्महादेवस्ततःस्मृतः॥ ३३ ॥ देवत्रयाश्रयेऽश्वत्थेउपर्यास्ते
स्थितिस्तव ॥ शिवस्त्वंशिवरूपत्वात् अघौघहरणाद्धरः ॥३४ ॥ तवचैवादिदेवत्त्वंप्रमाणंशुक्लवर्णकः॥ प्रकृतौशुक्लवर्णे
न्येवर्णाःस्युर्विकृतिंगताः ॥ ३५ ॥ यतःकर्पूरगौरस्त्वमादिदेवस्ततोह्यसि ॥ गणपत्याधारभूतान्मूलाधाराच्चतुर्दलात्
॥ ३६ ॥ स्वाधिष्ठानाभिधात्पद्मात्षड्दलाद्ब्रह्मदैवतात् ॥ मणिपूराद्दशदलात्मंडलाद्विष्ण्वधिष्ठितात् ॥ ३७॥ उ
परिद्वादशदलेऽनाहताख्येहृदिस्थिते ॥ तवस्थितिर्बोधयंतीसर्वेषांहृदयेस्थिताम् ॥ ३८॥ ब्रह्मविष्णूपरिष्टात्त्वंवदतीदं
चमुख्यताम् ॥ एकस्यतेर्चनाद्देवपंचायतनपूजनम् ॥ ३९ ॥ जायतेन्यसुरेचैवंसंभवोनहिसर्वथा ॥ स्वयंशिवस्त्वंवा
मोरौशक्तिर्गणपतिस्तथा ॥ ४० ॥ दक्षिणोरावक्षिणसूर्योहृदयेभक्तशाङ्र्गहरिः ॥ अतोस्यब्रह्मरूपत्वाद्भवात्सत्वाद्धरेरपि॥

श्रा०मा० ॥ ४१ ॥ भोक्तृत्वाच्चतवेशानश्रेष्ठत्वेकस्यसंशयः ॥ विरक्तत्वंशिक्षयतिश्मशानेपर्वतेस्थितिः ॥ ४२ ॥ उतामृतत्वस्ये अ०
॥२॥ शानमंत्रलिंगेनसूक्तके ॥ पौरुषेप्रतिपाद्योसिइतिप्राहुर्महर्षयः ॥ ४३ ॥ जगत्संहारकंहालाहलंकेनधृतंगले ॥ महाप्र २
लयकालाग्निंभालेधर्तुंचकःक्षमः ॥ ४४ ॥ भवांधकूपपतनेहेतुःकेनहतःस्मरः ॥ किंवर्ण्यभागधेयंतेयद्वक्तुर्हीदृशोभवा
न् ॥ ४५ ॥ त्वांस्तोतुंजन्मकोटयापिवराकोहंनचक्षमः ॥ कृत्वामयिकृपामेवमत्प्रश्नान्वक्तुमर्हसि ॥ ४६ ॥ ॥ इति
श्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमाहात्म्येप्रथमोध्यायः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥
ईश्वरउवाच ॥ ॥ साधुसाधुमहाभागविनीतोसिविरिंचिज ॥ श्रोतागुणयुतोयस्माच्छ्रद्धालुर्भक्तिभूषितः ॥ १ ॥ श्रा
वणेमासिविषयेयत्पृष्टंभवतानघ ॥ अदृष्टमपितेवक्ष्येप्रेम्णापरमयामुदा ॥ २ ॥ प्रियोभवतिचाद्वेष्टानम्रस्त्वंचतथावि
धिः ॥ पंचमोमस्तकश्छिन्नःप्रोद्धतस्यपितुस्तव ॥ ३ ॥ त्वंचतंमत्सरंत्यक्त्वामांयतःशरणंगतः ॥ अतोवक्ष्यामितेता
तभूत्वाचैकमनाःशृणु ॥ ४ ॥ कुर्यान्नक्तव्रतंयोगिन्श्रावणेनियतोनरः ॥ रुद्राभिषेकंकुर्वीतमासमात्रंदिनेदिने ॥ ५ ॥
स्वप्रीतिविषयस्यापिकस्यचित्त्यागमाचरेत् ॥ पुष्पैःफलैश्चधान्यैश्चतुलसीमंजरीदलैः ॥ ६ ॥ बिल्वपत्रैर्लक्षपूजांशं ॥२॥
करस्यसमाचरेत् ॥ कोटिलिंगादिकर्तव्यंब्राह्मणांश्चैवभोजयेत् ॥ ७ ॥ धारणापारणेकुर्यादुपोषणमथापिच ॥ पंचा

मृताभिषेकंचममप्रीतिकरंपरम् ॥ ८ ॥ अस्मिन्मासेकृतंयद्यत्तदानंत्यायकल्पते ॥ भूमिशायीब्रह्मचारीसत्य
वादीभवेन्मुने ॥ ९ ॥ ननयेन्मासमेनंतुव्रतवंध्यंकदाचन ॥ अनोदनंसमश्नीयाद्धविष्यान्नमथापिवा ॥ १० ॥
पत्रेचैवसमश्नीयाच्छाकमात्रंत्यजेद्व्रती ॥ किंचिद्व्रतीसर्वथास्याद्भक्तिमान्मुनिसत्तम ॥ ११ ॥ सदाचारोभूमिशायी
प्रातस्नायीजितेंद्रियः ॥ मत्पूजांप्रत्यहंकुर्यादेकाग्रकृतमानसः ॥ १२ ॥ पुरश्चरणमप्यत्रमंत्राणांसिद्धिदंपरम् ॥
शिवषड्वर्णमंत्रस्यगायत्र्याश्चजपंचरेत् ॥ १३ ॥ प्रदक्षिणानमस्कारान्वेदपारायणंतथा ॥ कृतंफलतिसद्योवावांछि
तार्थफलप्रदः ॥ १४ ॥ जपःपुरुषसूक्तस्यअधिकंफलदोभवेत् ॥ ग्रहयज्ञःकोटिहोमोलक्षहोमोयुतस्तथा ॥ कृतः
फलतिसद्योत्रवांछितार्थफलप्रदः ॥ १५ ॥ अस्मिन्मासेचैकदिनंयोवंध्यंव्रततोनयेत् ॥ सयातिनरकंघोरंयावदाभू
तसंप्लवम् ॥ १६ ॥ यथायंमेप्रियोमासस्तथाकिंचिन्नमेप्रियम् ॥ काम्यश्चफलदश्चायंनिष्कामस्यतुमोक्षदः ॥१७॥
तत्रतत्रतुयेधर्मास्तान्मत्तःशृणुसत्तम ॥ रवौरविव्रतंसोमेमत्पूजानक्तभोजनम् ॥ १८ ॥ प्रथमंसोममारभ्यव्रतंस्याद्रो
टकाभिधम् ॥ सार्धमासत्रयंतत्स्यात्सर्वकामार्थसिद्धिदम् ॥ १९ ॥ भौमेमंगलगौर्याश्चव्रतदह्नोर्बुधजीवयोः ॥ शुक्रे
जीवंतिकायाश्चआंजनेयनृसिंहयोः ॥ २० ॥ शनौव्रतंसमादिष्टंतिथिष्वथमुनेशृणु ॥ नभःशुक्लद्वितीयायांव्रतमौदुंब

राभिधम् ॥ २१ ॥ गौरीव्रतंतृतीयायांश्रावणेशुक्लपक्षके ॥ तथाशुक्लचतुर्थ्यांतुदूर्वागणपतिव्रतम् ॥ २२ ॥ विनायकी
तितस्याश्चसंज्ञास्यादपरामुने ॥ नागानांपूजनेशस्तापंचमीशुक्लपक्षके ॥ २३ ॥ इमांमानवकल्पादिजानीहिमुनि
सत्तम ॥ सूपोदनव्रतंषष्ठ्यांसप्तम्यांशीतलाव्रतम् ॥ २४ ॥ पवित्रारोपणंदेव्यावसौभूतेयथाभवेत् ॥ शुक्लकृष्णनव
म्योस्तुनक्तव्रतविधिःस्मृतः ॥ २५ ॥ दशम्यांशुक्लपक्षेतुआशासंज्ञांव्रतंभवेत् ॥ पक्षद्वयेविशेषोस्मिन्नेकादश्योस्तुक
श्चन ॥ २६ ॥ पवित्रारोपणंशुक्लद्वादश्यांतुहरेःस्मृतम् ॥ द्वादश्यांश्रीधरंपूज्यपरांगतिमवाप्नुयात् ॥ २७ ॥ उत्सर्जन
मुपाकर्मसभादीपस्तथैवच ॥ उपाकर्मसभायांतुरक्षाबंधस्तथापरः ॥ २८ ॥ श्रवणाकर्मतत्रैवतथासर्पबलिःस्मृतः ॥
हयग्रीवस्यावतारःपूर्णिमायांतुसप्तकम् ॥ २९ ॥ नभःकृष्णेतुसंकष्टचतुर्थीव्रतमुच्यते ॥ ज्ञेयामानवकल्पादिःश्रा
वणेकृष्णपंचमी ॥ ३० ॥ पूर्णावतारःकृष्णस्यकृष्णाष्टम्यांद्विजोत्तम ॥ अवतारःसमभवद्व्रतंतस्यमहोत्सवः ॥ ३१ ॥
अमायांश्रावणेमासिपिठोराव्रतमुच्यते ॥ कुशानांग्रहणंचैववृषभाणांचपूजनम् ॥ ३२ ॥ शुक्लाद्यतिथिमारभ्यतत्त
त्तिथिषुदेवताः ॥ वह्निर्देवःप्रतिपदिद्वितीयाब्रह्मदेवता ॥ ३३ ॥ तृतीयायास्तथागौरीचतुर्थ्यांगणनायकः ॥ सर्पा
धिपापंचमीस्यात्षष्ठीस्यात्स्कंददेवता ॥ सप्तम्यांभास्करोदेवःशिवदेवाष्टमीतिथिः ॥ ३४ ॥ दुर्गाधिपातुनवमीदशम्यं

तकदेवता ॥ एकादश्यधिपाश्चैवविश्वेदेवाःप्रकीर्तिताः ॥ ३५ ॥ द्वादश्याश्वहरिःकामस्त्रयोदश्यधिपोयमः ॥ चतु
र्दश्यांशिवश्चैवपौर्णमास्याःशशीपतिः ॥ ३६ ॥ अमायाःपितरोदेवाएतेतिथ्यधिपाःस्मृताः ॥ ससदेवस्तत्रपूज्योय
स्यदेवस्ययातिथिः ॥ ३७ ॥ अगस्त्यस्योदयोमासेप्रायेणात्रैवजायते ॥ कथयामिचतंकालंशृणुष्वैकमनामुने ॥ ३८ ॥
सिंहसंक्रातिदिवसाद्यदाद्वादशयांतिवै ॥ चत्वारिंशच्चघटिकास्तदागस्त्योदयोभवेत् ॥ ३९ ॥ सप्ताहानिततःपूर्वेअ
गस्त्यर्घ्यंसमाचरेत् ॥ द्वादशेष्वपिमासेषुआदित्योभिन्नसंज्ञया ॥ ४० ॥ तपतेश्रावणेतत्रगभस्तिरितिसंज्ञितः ॥
तत्पूजनंचकर्तव्यंमासेस्मिन्भक्तितत्परैः ॥ ४१ ॥ चतुर्षुयानिमासेषुव्रतानिविहितानिच ॥ श्रावणेचत्यजेच्छाकं
दधिभाद्रपदेतथा ॥ ४२ ॥ दुग्धमाश्वयुजेमासिकार्तिकेद्विदलंत्यजेत् ॥ इत्यादीनिसमस्तानितानिकर्तुमशक्नुवन् ॥
॥ ४३ ॥ एकस्मिन्श्रावणेमासिकुर्वंस्तत्फलभाग्भवेत् ॥ उद्देशोयंमयाप्रोक्तःसंक्षेपात्तवमानद ॥ ४४ ॥ अत्रत्यानां
व्रतानांतुधर्माणांमुनिसत्तम ॥ केनापिविस्तरोवक्तुंनालंवर्षशतैरपि ॥ ४५ ॥ ममप्रीत्यैहरेर्वापिकुर्याद्व्रतमशेषतः ॥
आवयोर्नहिभेदोस्तिपरमार्थविचारतः ॥ ४६ ॥ कल्पयंत्यत्रयेभेदंतेवैनिरयगामिनः ॥ सनत्कुमारतस्मात्त्वंश्रावणे
धर्ममाचर ॥ ४७ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणव्रतोद्देशकथनंनामद्वितीयोध्यायः ॥ २ ॥ ॥

सनत्कुमारउवाच ॥ ॥ भगवन्व्रतसंघस्यउद्देशःकथितस्त्वया ॥ तृप्तिर्नजायतेस्वामिन्विस्तराद्वक्तुमर्हसि ॥ १ ॥
यच्छ्रुत्वाकृतकृत्योहंभविष्यामिसुरेश्वर ॥ ॥ ईश्वरउवाच ॥ ॥ नक्तव्रतेनयोगीशश्रावणंयोनयेत्सुधीः ॥ २ ॥ द्वाद
शस्वपिमासेषुसनक्तफलभाग्भवेत् ॥ दिनावसानपूर्वंतुनक्तंस्याद्रात्रिभोजनम् ॥ ३ ॥ तत्राद्यत्रिघटिंत्यक्त्वाकालःस्या
न्नक्तभोजने ॥ ॥ ततःसंध्यात्रिघटिकाअस्तादुपरिभास्वतः ॥ ४ ॥ चत्वारीमानिकर्माणिसंध्यायांपरिवर्जयेत् ॥
आहारंमैथुनंनिद्रांस्वाध्यायंचचतुर्थकम् ॥ ५ ॥ गृहस्थयतिभेदेनव्यवस्थांचैवमेशृणु ॥ आत्मनोद्विगुणीच्छायामंदी
भवतिभास्करे ॥ ६ ॥ यतेर्नक्तंतुतत्प्रोक्तंननक्तंनिशिभोजनम् ॥ नक्षत्रदर्शनान्नक्तंगृहस्थस्यबुधैःस्मृतम् ॥ ७ ॥
यतेर्दिनाष्टनेभागेरात्रौतस्यनिषिध्यते ॥ नक्तंनिशायांकुर्वीतगृहस्थोविधिसंयुतः ॥८ ॥ यतिश्चविधवाचैवविधुरश्च
ससूर्यकम् ॥ विधुरश्चेत्पुत्रवान्स्यात्सतुरात्रौसमाचरेत् ॥ ९ ॥ अनाश्रमोप्याश्रमीस्यादपत्नीकोपिपुत्रवान् ॥ एवं
यथाधिकारंतुकुर्यान्नक्तव्रतंसुधीः ॥ १० ॥ अत्रनक्तव्रतीमासेपरांगतिमवाप्नुयात् ॥ तिथौप्रतिपदिप्रातःश्रावणेसमु
पस्थिते ॥ ११ ॥ संकल्पयेन्मासमेकंश्रावणेप्रत्यहंत्वहम् ॥ प्रातस्नानंकरिष्यामिब्रह्मचर्यंव्रतेस्थितः ॥ १२ ॥ भो
क्ष्यामिनक्तंभूशय्यांकरिष्येप्राणिनांदयाम् ॥ प्रारब्धेस्मिन्व्रतेदेवयद्यपूर्णेम्रियेह्यहम् ॥ १३ ॥ तदासंपूर्णतांयातुप्र

सादात्तेजगत्पते ॥ इतिसंकल्प्यमेधावीमासेनक्तव्रतंचरेत् ॥ १४ ॥ एवंनक्तंव्रतंकुर्वन्ममप्रियतमोभवेत् ॥ विप्रद्वारा तिरुद्रेणमहारुद्रेणवास्वयम् ॥ १५ ॥ अभिषेकंमासमात्रंरुद्रेणप्रत्यहंचरेत् ॥ तस्यप्रीणाम्यहंवत्सजलधाराप्रियोयतः ॥ १६ ॥ कुर्याद्रुद्रेणवाहोमंममप्रीतिकरंपरम् ॥ स्वस्ययद्रोचतेत्यंतंभोज्यंवाभोग्यमेववा ॥ १७ ॥ संकल्प्यद्विजवर्या यदत्त्वामासेस्वयंत्यजेत् ॥ अतःपरंशृणुमुनेलक्षपूजाविधिंपरम् ॥ १८॥ श्रीकामोबिल्वपत्रैश्चदूर्वाभिःशांतिकामुकः॥ आयुःकामेनकर्तव्यंचंपकैःपूजनंहरेः ॥ १९ ॥ विद्याकामेनकर्तव्यंमल्लिकाजातिभिस्तथा ॥ शिवविष्ण्वोःप्रसन्नत्वंतु लसीभिःप्रसिध्यति ॥ २० ॥ पुत्रकामेनकर्तव्यंबार्हतैःपूजनंशुभम् ॥ दुःस्वप्नप्रशमार्थायशस्तधान्यैःप्रपूजयेत्॥ २१॥ रंगवल्यादिभिर्दैवंदेवस्याग्रेविनिर्मितैः ॥ पद्मादिभिःस्वस्तिकाद्यैश्चक्राद्यैःपूजयेद्विभुम् ॥ २२ ॥एवंहिसर्वपुष्पैश्चसर्वे कामार्थसिद्धये ॥ लक्षपूजांप्रकुर्याच्चेत्सुप्रसन्नोहरोभवेत् ॥ २३ ॥ उद्यापनंततःकार्यंमंडपंचैवसाधयेत् ॥ वेदिकाचप्र कर्त्तव्यामंडपस्यत्रिभागतः ॥ पुण्याहवाचनंकृत्वाआचार्यंवरयेत्ततः ॥ २४ ॥ गीतवादित्रनिर्घोषैर्ब्रह्मघोषेणभूयसा ॥ प्रविश्यमंडपेतस्मिन्रात्रौजागरणंचरेत् ॥ २५ ॥ वेदिकायांप्रकर्तव्यंलिंगतोभद्रमुत्तमम्॥तन्मध्येतंडुलैःकुर्यात्कैला संचसुशोभनम् ॥ २६ ॥ कलशंस्थापयेत्तत्रताम्रंचैवमहाप्रभम् ॥ पंचपल्लवसंयुक्तंन्यसेद्वस्त्रंसुसूक्ष्मकम् ॥ २७ ॥

सौवर्णीप्रतिमांतत्रस्थापयेत्पार्वतीपतेः ॥ पूजांतत्रप्रकुर्वीतपंचामृतपुरःसरैः ॥ २८ ॥ धूपैर्दीपैःसनैवेद्यैर्गीतवादित्यनृ
त्यकैः ॥ वेदशास्त्रपुराणैश्वरात्रौजागरणंचरेत् ॥ २९ ॥ ततःप्रभातसमयेसुस्नातःसुशुचिर्भवेत् ॥ स्थंडिलंकारयेत्तत्र
स्वशाखोक्तविधानतः ॥ ३० ॥ होमंचसतिलाज्येनपायसेनचकारयेत् ॥ मूलमंत्रेणगायत्र्याशिवनाम्नांसहस्रकैः ॥
॥ ३१ ॥ येनमंत्रेणपूजातुक्ततातेनैवहोमयेत् ॥ शर्कराघृतमिश्रेणचरुणाजुहुयात्ततः ॥ ३२ ॥ ततःस्विष्टकृतंहुत्वा
पूर्णाहुतिमनंतरम् ॥ आचार्यंपूजयेत्सम्यग्वस्त्रालंकारभूषणैः ॥ ३३ ॥ ब्राह्मणान्पूजयेत्पश्चात्तेभ्योदद्याच्चदक्षिणाम् ॥
येनयेनप्रकुर्याच्चलक्षपूजामुमापतेः ॥ ३४ ॥ तत्तद्दद्यात्सुवर्णेनकृत्वाशंभुंप्रपूजयेत् ॥ यदिदीपःकृतस्तेनतद्दानंचैव
कारयेत् ॥ ३५ ॥ सुवर्णवर्तिकांकृत्वादीपमात्रंचरौप्यकम् ॥ गोघृतेनसमायुक्तंसर्वकामार्थसिद्धये ॥ ३६ ॥ क्षमापये
त्ततोदेवंब्राह्मणान्भोजयेच्छतम् ॥ एवंयःकुरुतेपूजांतस्यप्रीणाम्यहंमुने ॥ ३७ ॥ तत्रापिश्रावणेकुर्यात्तदानंत्यायक
ल्पते ॥ स्वप्रीतिविषयःकश्चित्पदार्थस्त्यज्यतेयदि ॥ ३८ ॥ मदर्पणधियाचात्रमासितस्यफलंशृणु ॥ इहामुत्रचत
त्प्राप्तिर्भवेल्लक्षगुणाधिका ॥ ३९ ॥ सकामत्वेतुचैवंस्यान्निष्कामत्वेपरागतिः ॥ रुद्राभिषेकंकुर्वाणस्तत्रत्याक्षरसंख्य
या ॥ ४० ॥ प्रत्यक्षरंकोटिवर्षंरुद्रलोकेमहीयते ॥ पंचामृतस्याभिषेकादमृतत्वंसमश्नुते ॥ ४१ ॥ तस्मिन्मासेभूमिशा

यीफलंतस्यापिमेशृणु ॥ प्रवालनिर्मितांश्रेष्ठांगजदंतभवामपि ॥ ४२ ॥ पाटीरनिर्मितांचापिखचितांनवरत्नकैः ॥
निःसीममृदुपक्षींद्रविशेषाद्द्विजसत्तम ॥ ४३ ॥ वरवस्त्रेणसंछन्नांतूलिकांचात्रशोभनाम् ॥ दशोपबर्हणैर्युक्तांशय्यांसल
भतेशुभाम् ॥ ४४ ॥ रम्यांगनासमायुक्तांरत्नदीपविभूषिताम् ॥ ब्रह्मचर्येणचाप्यत्रवीर्यपुष्टिर्भवेद्दृढा ॥ ४५ ॥ ओजो
बलंदेहदार्ढ्यंयद्धर्मस्योपकारकम् ॥ प्रत्यक्षंवैभवेत्तस्यब्रह्मप्राप्तिर्नसंशयः ॥ ४६ ॥ निष्कामस्यसकामस्यस्वर्गंदेवांग
नाशुभा ॥ अत्रमौनव्रतधरोमहान्वक्ताप्रजायते ॥ ४७ ॥ अहोरात्रदिनेवापिभुक्तिकालेऽथवापुनः ॥ घंटायाःपुस्तक
स्यापिव्रतांतेदानमाचरेत् ॥ ४८ ॥ सर्वशास्त्रप्रवीणःस्याद्वेदवेदांगपारगः ॥ वाचस्पतिसमोबुद्धौमौनमाहात्म्यतोभवे
त् ॥ ४९ ॥ मौनिनःकलहोनास्तितस्मान्मौनव्रतंपरम् ॥ ५० ॥ ॥ इतिश्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्वरस
नत्कुमारसंवादेनक्तव्रतलक्षपूजाभूमिशयनमौनादिव्रतकथनंनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥
॥ ईश्वरउवाच ॥ ॥ सनत्कुमारवक्ष्यामिधारणापारणाव्रतम् ॥ पुण्याहंवाचयेत्पूर्वमारभ्यप्रतिपद्दिनम् ॥ १ ॥
संकल्पयेन्ममप्रीत्यैधारणापारणाव्रतम् ॥ एकस्मिन्धारणंकुर्यात्पारणंचतथापरे ॥ २ ॥ उपवासोधारणेस्यात्पा
रणेभोजनंभवेत् ॥ समाप्तेमासिचैवात्रकुर्यादुद्यापनंव्रती ॥ ३ ॥ समाप्तेश्रावणेमासिपुण्याहंकारयेत्पुरा ॥ आचार्यं

वरयेत्पश्चाद्ब्राह्मणांश्चैवमानद ॥ ४ ॥ पार्वतीशंकरस्यापिप्रतिमांस्वर्णनिर्मिताम् ॥ पूर्णकुंभेतुसंस्थाप्यपूजयेन्निशिभ
क्तितः ॥ ५ ॥ रात्रौजागरणंकुर्यात्पुराणश्रवणादिभिः ॥ प्रातरग्निंसमाधायहोमंकुर्याद्यथाविधि ॥ ६ ॥ त्र्यंबकेणैवमंत्रे
णजुहुयाच्चतिलौदनम् ॥ तथैवशिवगायत्र्याजुहुयाच्चघृतौदनम् ॥ ७ ॥ षडक्षरेणमंत्रेणपायसंजुहुयात्ततः ॥ पूर्णाहु
तिंततोहुत्वाहोमशेषंसमापयेत् ॥ ८ ॥ ब्राह्मणान्भोजयेत्पश्चादाचार्यंचैवपूजयेत् ॥ एवंकृत्वामहाभागब्रह्महत्यादिपातकैः
॥ ९ ॥ मुच्यतेनात्रसंदेहस्तस्मात्कुर्यान्महाव्रतम् ॥ शृणुमासोपवासस्यश्रावणेविधिमादरात् ॥ १० ॥ संकल्पयेत्तुप्रतिप
द्दिनेप्रातर्व्रतंमुने ॥ नारीवापुरुषोवापिसंयतात्माजितेंद्रियः ॥ ११ ॥ ततोर्चयेदमायांतुशंकरंलोकशंकरम् ॥ संपूजयेत्षोड
शभिरुपचारैर्वृषध्वजम् ॥ १२ ॥ ब्राह्मणान्पूजयेच्चैववस्त्रालंकरणादिभिः ॥ भोजयेच्चयथाशक्त्याप्रणिपत्यविसर्जयेत्
॥ १३ ॥ एवंमासोपवासस्तुममप्रीतिकरोभवेत् ॥ रुद्रवर्तिविधानंचसंमितंलक्षसंख्यया ॥ १४ ॥ शृणुष्वावहितोभूत्वासर्वसि
द्धिकरंनृणाम् ॥ कार्पासतंतुभिःकार्याएकादशभिरादरात् ॥ १५ ॥ वर्तयस्तारुद्रवर्तिसंज्ञाप्रीतिकराममा ॥ श्रावणस्याद्यदिव
सेसंकल्प्यविधिपूर्वकम् ॥ १६ ॥ देवदेवंमहादेवंलक्षवर्तिभिरादरात् ॥ नीराजयामिगौरीशंश्रावणेमासिभक्तितः ॥ १७ ॥
पूजयित्वाप्रतिदिनंवर्तीनांतुसहस्रतः ॥ नीराजयेदंत्यदिनेसहस्राण्येकसप्ततिः ॥ १८ ॥ अथवाप्रत्यहंदद्यात्सहस्र

त्रयमादृतः ॥ चरमेतुदिनेदद्यात्सहस्राणित्रयोदश ॥ १९ ॥ एकस्मिन्वादिनेरुद्रवर्तिलक्षंप्रदीपयेत् ॥ सुघृतेना
पिबहुनास्निग्धास्तामममवल्लभाः ॥ २० ॥ पूजयित्वातुविश्वेशंशृणुयाच्चकथांततः ॥ २१ ॥ ॥ सनत्कुमारउवाच॥
॥ देवदेवजगन्नाथजगदानंदकारक ॥ व्रतस्यास्यप्रभावंमेकृपांकृत्वावदप्रभो ॥ केनचीर्णंव्रतमिदंविधिरुद्यापनेकथ
म् ॥ २२ ॥ ईश्वरउवाच ॥ ॥ शृणुवैधातृयत्नेनव्रतानामुत्तमंव्रतम् ॥ रुद्रवर्त्याख्यंमहापुण्यंसर्वोपद्रवनाशनम् ॥ २३ ॥
प्रीतिसौभाग्यजननंपुत्रपौत्रसमृद्धिदम् ॥ शंकरप्रीतिजननंशिवलोकप्रदंपरम् ॥ २४ ॥ रुद्रवर्तिसमंनास्तित्रिषुलो
केषुसुव्रतम् ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ २५ ॥ क्षिप्रानद्यास्तटेरम्येपुरीउज्जयिनीशुभा ॥ तस्यामासी
त्सुगंधाख्यावारस्त्रीह्यतिसुंदरी ॥ २६ ॥ तयाशुल्कंकृतंस्वीयेसुरतेतुसुदुःसहम् ॥ सुवर्णानांशतंलोकेप्रतिज्ञांकृत
वत्यथ ॥ २७ ॥ युवानश्चतयाविप्राभ्रंशिताश्चसुगंधया ॥ राजानोराजपुत्राश्चनग्नीकृत्यपुनःपुनः ॥ २८ ॥ तेषां
भूषांगृहीत्वातुधिकृतास्तुसुगंधया ॥ एवंहिबहवोलोकालुंठितास्तेसुगंधया ॥ २९ ॥ तस्यास्तुदेहगंधेनक्रोशमात्रं
सुगंधितम् ॥ रूपलावण्यकांतीनांसाप्रतिष्ठाधरातले ॥ ३० ॥ षट्त्रिंशद्रागभार्याणांषड्रागाणांचगायने ॥ तत्संत
त्योअनंताश्चकुशलागानकर्मणि ॥ ३१ ॥ नृत्येरंभादिकाःसर्वास्तर्जयंतीसुरांगनाः ॥ गत्यागजांश्चहंसांश्चविहसं

तीपदेपदे ॥ ३२ ॥ कामबाणान्प्रेरयंतीकटाक्षैर्भ्रूकृतैश्चतैः ॥ कदाचित्सागताक्षिप्रांकौतुकाविष्टमानसा ॥ ३३ ॥
ददर्शसामनोरम्यामृषिभिःपरिसेविताम् ॥ केचिद्ध्यानपराविप्राःकेचिज्जपपरायणाः ॥ ३४ ॥ रताःशिवार्चनेकेचिद्वि
ष्णोःकेचित्प्रपूजने ॥ तेषांमध्येवसिष्ठोहितयादृष्टोमहामुने ॥ ३५ ॥ तस्याधर्मेभवेद्बुद्धिस्तद्दर्शनमहत्त्वतः ॥ वि
गताशाजीवनेपिविषयेषुविशेषतः ॥ ३६ ॥ विनम्रकंधराभूत्वाप्रणिपत्यपुनःपुनः ॥ स्वकर्मपरिहारायपप्रच्छमुनि
पुंगवम् ॥ ३७ ॥ सुगंधोवाच ॥ ॥ अनाथनाथविप्रेंद्रसर्वविद्याविशारद ॥ मयाकृतानियोगीशपापानिसुबहून्यपि ॥
तत्सर्वपापनाशायउपायंब्रूहिमेप्रभो ॥ ३८ ॥ ईश्वरउवाच ॥ ॥ एवमुक्तस्तयाविप्रोवसिष्ठोमुनिरादरात् ॥ तस्याः
कर्मसविज्ञायसोब्रवीद्दीनवत्सलः ॥ ३९ ॥ वसिष्ठउवाच ॥ शृणुष्वावहिताभूत्वातवपापस्यसंक्षयः ॥ येनजायेतपु
ण्येनतत्सर्वंकथयामिते ॥ ४० ॥ गच्छवाराणशींभद्रेत्रिषुलोकेषुविश्रुताम् ॥ गत्वाकुरुष्वतत्क्षेत्रेव्रतंत्रैलोक्यदुर्ल
भम् ॥ ४१ ॥ रुद्रवर्त्यांमहापुण्यंशिवप्रीतिकरंपरम् ॥ कृत्वाव्रतमिदंभद्रेप्राप्स्यसित्वंपरांगतिम् ॥ ४२ ॥ ईश्वरउ
वाच ॥ ॥ ततःसाकोशमादायभृत्यंचैवसुमित्रकम् ॥ गत्वाकाशींव्रतंचक्रेवसिष्ठोक्तविधानतः ॥ ४३ ॥ ततःसास
शरीरेणतस्मिंल्लिंगेलयंययौ ॥ ४४ ॥ एवंयाकुरुतेनारीव्रतमेतत्सुदुर्लभम् ॥ यंयंचिंतयतेकामंतंतंप्राप्नोत्यसंशयः ॥

॥ ४५ ॥ माहात्म्यंशृणुमाणिक्यवर्तीनामपिसुव्रत ॥ व्रतेनतासांविप्रेंद्रमदर्धासनभागिनी ॥ ४६ ॥ जायतेमत्प्रिया
साहियावदाभूतसंप्लवम् ॥ उद्यापनमथोवक्ष्येव्रतसंपूर्णहेतवे ॥ ४७ ॥ कलशेस्थापयेद्देवमुमयासहितंशिवम् ॥
सुवर्णनिर्मितंदेवंवृषभंरौप्यनिर्मितम् ॥४८॥ विधिनापूजनंकृत्वारात्रौजागरणंचरेत् ॥ ततःप्रभातेविमलेस्नात्वानद्यां
विधानतः ॥ ४९ ॥ आचार्यंवरयेद्भक्त्याद्विजैरेकादशैःसह ॥ होमश्चैवप्रकर्तव्योघृतपायसबिल्वकैः ॥ ५० ॥ रुद्र
सूक्तेनगायत्र्यामूलमंत्रेणवापुनः ॥ ततःपूर्णाहुतिंहुत्वाआचार्यादीन्प्रपूजयेत् ॥ ५१ ॥ तथैकादशसद्विप्रान्सपत्नी
कांस्तुभोजयेत् ॥ एवंयाकुरुतेनारीसर्वपापैःप्रमुच्यते ॥ ५२ ॥ कथांश्रुत्वाविधानेनस्थाप्यंसर्वंन्यवेदयेत् ॥ अश्व
मेधसहस्रस्यफलंभवतिनिश्चितम् ॥ ५३ ॥ इतिश्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्वरसनत्कुमारसंवादेधारणा
पारणामासोपवासरुद्रवर्तिकथनंनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ ईश्वरउवाच ॥ ॥ माहात्म्यंकोटिलिंगानांपुण्यंवक्तुंनशक्यते ॥ एकैकस्यापिलिंगस्यकिंपुनःकोटिसंख्यया ॥ १ ॥
अशक्तौलक्षकंकुर्यात्सहस्रमथवाशतम् एकस्यापिहिलिंगस्यकारणान्ममसन्निधिः ॥ २ ॥ षडक्षरेणमंत्रेणपूजाकार्या
स्मरद्विषः ॥ उपचारैःषोडशभिर्भक्तियुक्तेनचेतसा ॥ ३ ॥ उद्यापनंचकर्तव्यंप्रइयज्ञपुरःसरं॥संपादनीयोहोमश्चब्रा

ह्मणांश्चैवभोजयेत् ॥ ४ ॥ नाकालमरणंतस्यवंध्यत्वहरणंपरम् ॥ सर्वापत्तिक्षयकरंसर्वसंपत्प्रवर्धनम् ॥ ५ ॥ प्रेत्य
कैलासवासश्चआकल्पंममसन्निधौ ॥ पंचामृताभिषेकंचयःकुर्याच्छ्रावणेनरः ॥ ६ ॥ सपंचामृतभोजीस्यात्संपन्नोगो
धनेनच ॥ अत्यंतंमधुरालापीप्रियश्चत्रिपुरद्विषः ॥ ७ ॥ अन्नोदनव्रतीचैवहविष्याशीचयोनरः ॥ व्रीह्यादिसर्वधान्या
नामक्षयोसौनिधिर्भवेत् ॥ ८ ॥ पत्रावल्यांतुभुंजानःस्वर्णभाजनभोजनः ॥ शाकवर्जनतःस्याद्वैशककर्तानरोत्तमः ॥
॥ ९ ॥ केवलंभूमिशायीतुकैलासेवासमाप्नुयात् ॥ प्रातस्नानान्नभोमासिअब्दतत्फलभाङ्मतः ॥ १० ॥ जितेंद्रिय
त्वान्मासेस्मिन्बलमैंद्रियकंभवेत् ॥ स्फाटिकेश्ममयेवापिमात्स्नैमारकतेपिवा ॥ ११ ॥ स्वयंभौवास्वयंभौवापैष्टेधातु
मयेपिवा ॥ चंदनेनावनीतेवाअन्यस्मिन्वापिलिंगके ॥ १२ ॥ सकृत्पूजांप्रकुर्वाणोब्रह्महत्याशतंदहेत् ॥ सूर्यचंद्रो
परागेषुसिद्धिःक्षेत्रेऽपिवाक्कचित् ॥ १३ ॥ सिद्धिर्यालक्षजाप्येनसकृत्स्याज्जपतोऽत्रसा ॥ अन्यकालेकृतायेस्युर्नम
स्काराःप्रदक्षिणाः ॥ १४ ॥ सहस्त्रेणफलंयत्स्यान्मासेऽस्मिन्नेकवारतः ॥ मत्प्रियेश्रावणेमासिवेदपारायणेकृते ॥
॥ १५ ॥ सर्वेषांवेदमंत्राणांसिद्धिःसम्यक्प्रजायते ॥ मासेस्मिन्पौरुषंसूक्तंजपतेश्रद्धयान्वितः ॥ १६ ॥ कृत्वासंख्या
सहस्त्रंतुकलौस्यात्तुचतुर्गुणम् ॥ वर्णानांसंख्ययावापिशतंकुर्यादतंद्रितः ॥ १७ ॥ अशक्तःसंख्ययाकर्तुंशतमानेन

वाजपेत् ॥ ब्रह्महत्यादिपापेभ्योमुच्यतेनात्रसंशयः ॥ १८ ॥ गुरुतल्पेकृतेपापेप्रायश्चित्तमिदंपरम् ॥ नास्त्येतत्स
दृशंपुण्यंपवित्रंपापनाशनम् ॥ १९ ॥ विनापौरुषजाप्येनननयेदेकमप्यहः ॥ अर्थवादमिमंब्रूयात्सनरोनिरयीभवेत् ॥
॥ २० ॥ ग्रहयज्ञःप्रकर्तव्यःसमिच्चरुतिलाज्यकैः ॥ धूपगंधप्रसूनादिनैवेद्यादिप्रभेदतः ॥ २१ ॥ तद्रूपाणांचध्या
नादिसंपाद्यचयथायथम् ॥ कोटिहोमोलक्षहोमोऽयुतहोमस्तुशक्तितः ॥ २२ ॥ तिलैर्व्याहृतिभिःकार्योग्रहयज्ञाभि
धोप्यसौ ॥ अथवक्ष्यामिवाराणांव्रतानिशृणुसांप्रतम् ॥ २३ ॥ तत्रादौरविवारस्यव्रतंवक्ष्यामितेऽनघ ॥ अत्राप्युदाह
रंतीममितिहासंपुरातनम् ॥ २४ ॥ प्रतिष्ठानपुरेरम्येसुकर्मानामवैद्विजः ॥ आसीद्दरिद्रःकृपणोभैक्ष्यचर्यापरायणः ॥
॥ २५ ॥ एकदासगतोधान्यंयाचितुंपर्यटन्पुरम् ॥ स्त्रियोददर्शसदनेकस्यचिद्गृहमेधिनः ॥ २६ ॥ चरंत्योरविवार
स्यमिलिताव्रतमुत्तमम् ॥ तदोचुस्ताश्चतंदृष्ट्वाआच्छादयतसत्वरम् ॥ २७ ॥ पूजाविधिंततोविप्रःप्रार्थयामासताः
स्त्रियः ॥ छाद्यतेकिंनुभोःसाध्व्योभवतीभिरिदंव्रतम् ॥ २८ ॥ कथयध्वंकृपांकृत्वाममोपरिदयालवः ॥ परोपकारस
दृशोधर्मोनास्तिजगत्त्रये ॥ २९ ॥ साधूनांसमचित्तानांपरार्थःस्वार्थएवहि ॥ दरिद्रपीडितश्चाहंश्रुत्वेदंव्रतमुत्तम
म् ॥ ३० ॥ चरिष्यामिविधिंब्रूतफलंचास्यव्रतस्यहि ॥ ३१ ॥ स्त्रियऊचुः ॥ उन्मादंवाप्रमादंवाविस्मृतिंवा

करिष्यसि ॥ अभक्तिंवाप्यनास्थांवाकथंदेयंतवद्विज ॥ ३२ ॥ इतितासांवचःश्रुत्वाविप्रेंद्रोवाक्यमब्रवीत् ॥ ज्ञानबा
नस्मिभोःसाध्व्योभक्तिमांश्चास्मिसुव्रताः ॥ ३३ ॥ एवंतद्वचनंश्रुत्वाप्रौढातासुत्वयाभवत् ॥ साप्रोवाचव्रतंतस्मैयथा
भूतंचतद्विधम् ॥ ३४ ॥ श्रावणेशुक्लपक्षेतुप्रथमेरविवासरे ॥ मौनेनोत्थायावगाहंकुर्याच्छीतोदकेनतु ॥ ३५ ॥ स्व
नित्यकर्मसंपाद्यनागवल्लीदलेशुभे ॥ परिधिद्वादशयुतंमंडलंतत्रसंलिखेत् ॥ ३६ ॥ अर्कवद्वर्तुलंसम्यग्रक्तचंदनतः
शुभम् ॥ तत्रसंज्ञायुतंसूर्यंपूजयेद्रक्तचंदनात् ॥ ३७ ॥ जानुभ्यामवनींगत्वाअर्घ्यान्द्वादशतंडुलैः ॥ रक्तचंदनमि
श्रैश्चजपाकुसुमसंयुतम् ॥ ३८ ॥ दद्याद्गभस्तयेसम्यक्श्रद्धाभक्तिपुरःसरम् ॥ रक्ताक्षतैर्जपापुष्पैस्तथान्यैरुपचार
कैः ॥ ३९ ॥ नारीकेलस्यवीजंतुखंडशर्करयायुतं ॥ नैवेद्यमर्पयित्वातुमंत्रैरादित्यलिंगकैः ॥ ४० ॥ स्तुवीतद्वाद
शवरैर्नमस्कारान्प्रदक्षिणाः ॥ षट्तंतुनिर्मितंसूत्रंषड्भिर्ग्रंथिभिरन्वितम् ॥ ४१ ॥ अर्पयित्वातुदेवेशंबध्नीयात्तुगलेच
तत् ॥ द्विजायवायनंदद्यात्फलैर्द्वादशभिर्युतम् ॥ ४२ ॥ एतद्व्रतप्रकारंनश्रावयेत्कस्यचित्पुरा ॥ एवंव्रतेकृतेविप्र
निर्धनोधनमाप्नुयात् ॥ ४३ ॥ अपुत्रोलभतेपुत्रंकुष्ठीकुष्ठात्प्रमुच्यते ॥ बद्धःस्याद्बंधरहितोरोगीरोगेणहीयते ॥ ४४ ॥
किंबहूक्तेनविप्रेंद्रयद्यदिच्छतिवांछितं ॥ तत्तल्लभेत्साधकोसौव्रतस्यास्यप्रभावतः ॥ ४५ ॥ एवंचतुर्षुवारेषुकदाचिद्

पिपंचसु ॥ उद्यापनंततःकार्यंव्रतसंपूर्णहेतवे ॥ ४६ ॥ एवंकुरुष्वविप्रेंद्रसर्वसिद्धिर्भविष्यति ॥ नमस्कृत्वातुताः
साध्वीर्विप्रःस्वगृहमाययौ ॥४७॥ तथाचकारतत्सर्वंव्रतंचैवयथाश्रुतं ॥ स्वकन्यकाद्वयस्यापिश्रावयामासतद्विधिम्॥
॥ ४८ ॥ तस्यश्रवणमात्रेणदर्शनात्पूजनस्यच ॥ स्वरंगनोपमेकन्येजातेतस्यप्रभावतः ॥ ४९ ॥ तदाप्रभृतिविप्र
स्यगृहेलक्ष्मीर्विवेशह ॥ नानामार्गैर्निमित्तैश्चलक्ष्मीवानतिसोभवत् ॥ ५० ॥ कदाचिद्गच्छताराज्ञाविप्रसद्मपुरोध्व
ना ॥ वातायनेस्थितेकन्येदृष्टेनिरुपमेशुभे ॥ ५१ ॥ देहावयवसंस्थानैर्वस्तुयद्यच्चसुंदरम् ॥ त्रैलोक्येभर्त्सयंत्यौतेपद्म
चंद्रादिकंचयत् ॥ ५२ ॥ राजामोहंसमापेदेतत्रैवावस्थितःक्षणम् ॥ आमंत्र्यब्राह्मणंसद्यःप्रार्थयामासकन्यके॥५३॥
विप्रोपिहर्षितोभूत्वाप्रादाद्राज्ञेसुताद्वयं ॥ राजानंप्राप्यभर्तारंतेऽपिकन्येमुदान्विते ॥ ५४ ॥ पुत्रपौत्रादिसंपन्नेचक्र
तुश्चस्वयंव्रतं ॥ व्रतमेतत्समाख्यातंमुनेतवमहोदयम् ॥ ५५ ॥ यस्यश्रवणमात्रेणसर्वान्कामानवाप्नुयात् ॥ अनुष्ठा
नफलंतस्यकिंवर्ण्यंविधिनंदन ॥ ५६ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येप्रकीर्णक
नानाव्रतरविवारव्रतादिकथनंनामपंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
सनत्कुमारउवाच ॥ रविवारस्यमाहात्म्यंश्रुतंमेहर्षकारकम् ॥ सोमवारस्यमाहात्म्यंश्रावणेमासिमेवद ॥ १ ॥ ईश्वर

उवाच ॥ ॥ रविर्मेनयनंतस्यमाहात्म्यमिदमुत्तमम् ॥ उमासहितमन्नान्नस्तस्यसोमस्यकिंपुनः ॥२ ॥ माहात्म्यंवर्ण
नीयंमेयत्किंचिदपितेब्रुवे ॥ सोमश्चंद्रोविप्रराजःसोमःस्याद्यज्ञसाधनम् ॥ ३ ॥ निमित्तानिचतन्नाम्नःशृणुमत्तःसमा
हितः ॥ मत्स्वरूपोयतोवारस्ततःसोमइतिस्मृतः ॥ ४ ॥ प्रदातासर्वराज्यस्यश्रेष्ठश्चैवततोहिसः ॥ समयज्ञस्यफ
लदोव्रतकर्ताह्यतोहिसः॥ ५॥ तस्यशृणुविधिंविप्रविस्तरात्कथयामिते॥द्वादशेष्वपिमासेषुसोमवारःप्रशस्यते ॥६ ॥
तावत्कर्तुमशक्तश्चेच्छ्रावणेमासिकारयेत् ॥ अस्मिन्मासेव्रतंकृत्वाअब्दव्रतफलंलभेत् ॥ ७ ॥ श्रावणेशुक्लपक्षेतुप्रथ
मेसोमवासरे ॥ संकल्पयेद्व्रतंसम्यक्शिवोमेप्रीयतामिति ॥ ८ ॥ एवंचतुर्षुवारेषुभवेयुःपंचवायदि ॥ प्रातःसंकल्पये
त्तत्रनक्तंचशिवपूजनम् ॥ ९ ॥ उपचारैःषोडशभिःसायंचपूजयेच्छिवम् ॥ शृणुयाच्चकथांदिव्यामेकाग्रकृतमानसः॥
॥ १० ॥ सोमवारव्रतस्यास्यकथ्यमानंनिबोधमे ॥ श्रावणेप्रथमेसोमेगृह्णीयाद्व्रतमुत्तमम् ॥ ११ ॥ सुस्नातश्चशुचि
र्भूत्वाशुक्लांबरधरोनरः ॥ कामक्रोधाद्यहंकारद्वेषपैशून्यवर्जितः ॥ १२ ॥ आहरेच्छ्वेतपुष्पाणिमालतीमल्लिकादिकाः॥
अन्यैश्चविविधैःपुष्पैरभीष्टैरुपचारकैः ॥ १३ ॥ पूजयेन्मूलमंत्रेणत्र्यंबकेणततःपरं ॥ शर्वायभवनाशायमहादेवाय
धीमहि ॥ १४ ॥ उग्रायचोग्रनाथायभवायशशिमौलिने ॥ १५ ॥ रुद्रायनीलकंठायशिवायभवहारिणे ॥ एवंसंपूज्य

देवेशमुपचारैर्मनोहरैः ॥ १६ ॥ यथाविभवसारेणतस्यपुण्यफलंशृणु ॥ सोमवारेयजंतेयेपार्वत्यासहितंशिवम् ॥ ते
लभंत्यक्षयाँल्लोकान्पुनरावृत्तिदुर्लभान् ॥ १७ ॥ अत्रनक्तेनयत्पुण्यंकथयामिसमासतः ॥ सप्तजन्मार्जितंपापमभेद्यं
देवदानवैः ॥ १८ ॥ प्रणश्येन्नक्तभुक्तेननात्रकार्याविचारणा ॥ उपवासेनवाकुर्याद्व्रतमेतदनुत्तमम् ॥ १९ ॥ पुत्रा
र्थीलभतेपुत्रान्धनार्थीलभतेधनं ॥ यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः ॥ २० ॥ इहलोकेचिरंस्थित्वाभुक्त्वाभोगा
न्यथेप्सितान् ॥ विमानवरमारुह्यरुद्रलोकेमहीयते ॥ २१ ॥ चलंचित्तंचलवित्तंचलंजीवितमेवच ॥ एवंज्ञात्वाप्रय
त्नेनव्रतस्योद्यापनंचरेत् ॥ २२ ॥ उमामहेश्वरौहैमौराजतेवृषभेस्थितौ ॥ यथाशक्त्याप्रकर्तव्यौवित्तशाठ्यंनकारये
त् ॥ २३ ॥ मंडलंलिंगतोभद्रंदिव्यंवैकारयेच्छुभम् ॥ तत्रसंस्थापयेत्कुंभंश्वेतवस्त्रयुगान्वितम् ॥ २४ ॥ ताम्रपा
त्रंवैणवंवाकुंभस्योपरिविन्यसेत् ॥ तस्योपरिन्यसेद्देवमुमयासहितंशिवम् ॥ २५ ॥ श्रुतिस्मृतिपुराणोक्तैर्मंत्रैःसंपूज
येच्छिवम् ॥ पुष्पमंडपिकाकार्यावितानंचैवशोभनम् ॥ २६ ॥ रात्रौजागरणंकार्यंगीतवादित्रनिःस्वनैः ॥ स्वगृह्यो
क्तविधानेनततोग्निंस्थापयेद्बुधः ॥ २७ ॥ ततोहोमंचशर्वाद्यैरेकादशसुनामभिः ॥ पालाशाभिःसमिद्भिश्चहूयादष्टा
धिकंशतम् ॥ २८ ॥ यवव्रीहितिलाद्यैश्चआप्यायस्वेतिमंत्रतः ॥ बिल्वपत्रैस्त्र्यंबकेणषडूवर्णेनापिवापुनः ॥ २९ ॥

पूर्णाहुतिंततोहुत्वाकृत्वास्विष्टकृतादिकम् ॥ आचार्यंपूजयेत्पश्चाद्गांचतस्मैप्रदापयेत् ॥ ३० ॥ ब्राह्मणान्भोजयेत्पश्चादेकादशसुशोभनम् ॥ एकादशघटास्तेभ्योवंशपात्रसमन्विताः ॥३१॥ संपूजितंततोदेवंदेवोपकरणानिच॥ आचार्यायततोदद्यात्प्रार्थयेत्तदनंतरम् ॥ ३२ ॥ परिपूर्णंव्रतंमेस्याच्छिवोमेप्रीयतामिति ॥ बंधुभिःसहभुंजीतततो हर्षपुरःसरम् ॥ ३३ ॥ अनेनैवविधानेनयइदंव्रतमाचरेत् ॥ यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः ॥ ३४ ॥ शिवलोकेततोगत्वातस्मिँल्लोकेमहीयते ॥ कृष्णेनाचरितंपूर्वंसोमवारव्रतंशुभम् ॥ ३५ ॥ नृपैःश्रेष्ठैस्तथाचीर्णमास्तिकैर्धर्मतत्परैः ॥ इदंयःशृणुयान्नित्यंसोपितत्फलमाप्नुयात् ॥ ३६ ॥ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येसोमवारव्रतकथनंनामषष्ठोऽध्यायः॥ ६ ॥ ॥ छ ॥ ॥ छ ॥ ॥छ॥

॥ ईश्वरउवाच ॥ ॥ सनत्कुमारवक्ष्यामिभौमव्रतमनुत्तमम् ॥ यस्यानुष्ठानमात्रेणअवैधव्यंप्रजायते ॥ १ ॥ विवाहानंतरंपंचवर्षाणिव्रतमाचरेत् ॥ नामास्यमंगलागौरीव्रतंपापप्रणाशनम् ॥ २ ॥ विवाहानंतरंचाद्येश्रावणेशुक्लपक्षके ॥ प्रथमंभौमवारस्यव्रतमेतत्तुकारयेत् ॥ ३ ॥ पुष्पमंडपिकाकार्याकदलीस्तंभमंडिता ॥ नानाविधैःफलैश्चैवपट्टकूलैश्चभूषयेत् ॥ ४ ॥ तत्रसंस्थापयेद्देव्याःप्रतिमांस्वर्णनिर्मिताम् ॥ अन्यधातुमयींवापिस्वशक्त्यातत्रपू

जयेत् ॥ ५ ॥ उपचारैःषोडशभिर्मंगलागौरिसंज्ञिताम् ॥ दूर्वादलैःषोडशभिरपामार्गदलैस्तथा ॥ ६ ॥ तावत्सं
ख्यैस्तंदुलैश्चचणानांशकलैस्तथा ॥ षोडशोन्मितवर्तीभिस्तावद्दीपांश्चदीपयेत् ॥ ७ ॥ दध्योदनंचनैवेद्यंतत्रभ
क्त्याप्रकल्पयेत् ॥ समीपंस्थापयेद्देव्याद्दषदंचोपलंतथा ॥ ८ ॥ एवंकृत्वातुपंचाब्दंततउद्यापनंचरेत् ॥ मात्रेदद्या
द्वायनंतुप्रकारंशृणुतस्यच ॥ ९ ॥ प्रतिमांमंगलागौर्याःसुवर्णपलनिर्मिताम् ॥ तदर्धेनतदर्धेनशक्त्यावाप्यथकारये
त् ॥ १० ॥ तंडुलैःपूरितेभांडेशक्त्यास्वर्णादिनिर्मिते ॥ संस्थाप्यपरिधानीयंरमणीयांचकंचुकीम् ॥ ११ ॥ तयो
रुपरिदेव्यास्तुप्रतिमांस्थापयेत्ततः ॥ समीपभागेसंस्थाप्यदृषदंचोपलंतथा ॥ १२ ॥ रौप्येणनिर्मितंमात्रेएवंदद्यात्तु
वायनम् ॥ षोडशापिसुवासिन्योभोजनीयाःप्रयत्नतः ॥ १३ ॥ एवंकृतेव्रतेविप्रसौभाग्यंसप्तजन्मसु ॥ पुत्रपौत्रादि
भिश्चैवरमतेसंपदायुता ॥ १४ ॥ सनत्कुमारउवाच ॥ ॥ केनेदंव्रतमाचीर्णंकस्यजातंफलंपुरा ॥ यथास्यात्प्रत्ययः
शंभोकृपांकृत्वातथावद ॥ १५ ॥ ईश्वरउवाच ॥ ॥ कुरुदेशेपूरुराजाश्रुतकीर्तिरितिश्रुतः ॥ बभूवश्रुतसंपन्नःकीर्ति
मान्हतशात्रवः ॥ १६ ॥ चतुःषष्टिकलाभिज्ञोधनुर्विद्याविशारदः ॥ पुत्रादन्यच्छुभंसर्वंतस्यराज्ञोबभूवह ॥ १७ ॥
संतानविषयेऽथासौबहुचिंताकुलोभवत् ॥ देव्याआराधनंचक्रेजपध्यानपुरःसरम् ॥ १८ ॥ क्रूरेणतपसातस्यदेवीतु

श्रा॰मा॰ ष्टाबभूवह ॥ उवाचवचनंतस्मैवरंवरयसुव्रत ॥ १९ ॥ श्रुतकीर्तिरुवाच ॥ ॥ यदिदेविप्रसन्नासिपुत्रंमेदेहिशोभन अ॰
॥१२॥ म् ॥ अन्यद्देवित्वत्प्रसादान्नन्यूनंकिंचिदस्तिमे ॥ २० ॥ इतितस्यवचःश्रुत्वादेवीप्राहशुचिस्मिता ॥ दुर्लभंयाचि ७
तंराजन्दास्येतुभ्यंकृपावशात् ॥ २१ ॥ परंशृणुष्वराजेंद्रपुत्रश्चेद्गुणवत्तरः ॥ ईप्सितश्चेत्षोडशाब्दंजीविष्यतिनचाधि
कम् ॥ २२ ॥ रूपविद्याविहीनश्चेच्चिरजीवीभविष्यति ॥ इतिदेव्यावचःश्रुत्वानृपश्चिंतातुरोभवत् ॥ २३ ॥ भार्य
यासहसंमंत्र्ययथाचेगुणभूषितम् ॥ सर्वलक्षणसंपन्नंषोडशाब्दायुषंसुतम् ॥ २४ ॥ आज्ञापयामासतदादेवीभक्तंन
राऽधिपम् ॥ आम्रवृक्षोममद्वारेवर्ततेनृपनंदन ॥ २५ ॥ तस्यैकंफलमादायपत्न्यैदेहिममाज्ञया ॥ भक्षणार्थंचसा
धत्रींगर्भंसद्योनसंशयः ॥ २६ ॥हृष्टोराजातथाचक्रेपत्नीगर्भंचसादधौ ॥ दशमेमासिसुषुवेपुत्रंदेवसुतोपमम् ॥ २७॥
जातकर्मादिकंचक्रेहर्षशोकसमन्वितः ॥ चिरायुरितिनामास्यपिताचक्रेशिवंभजन् ॥ २८ ॥ प्राप्तेतुषोडशेवर्षेचिंता
मापसभार्यकः ॥ ततश्चक्रेविचारंसकष्टलब्धोह्ययंसुतः ॥ २९ ॥ स्वसमीपेकथंमृत्युर्द्रष्टव्योदुःखदोऽस्यतु ॥ का
शींप्रस्थापयामासमातुलेनसमंविभुः ॥ ३० ॥ भ्रातरंप्रार्थयामासराजपत्नीयशस्विनी ॥ धृत्वाकार्पटिकंवेषंकाशींप्र ॥१२॥
तिसुतंनय ॥ ३१ ॥ मृत्युंजयःप्रार्थितोस्तिपुत्रार्थंतुमयापुरा ॥ प्रेषयिष्यामिविश्वेशयात्रार्थंचजगत्पतेः ॥ ३२ ॥

तस्मान्नेयःसुतोमेऽद्यपालनीयश्चयत्नतः ॥ इतिश्रुत्वास्वसुर्वाक्यंस्वस्त्रीयेनसमंययौ ॥ ३३ ॥ दिनानिकतिचिद्गच्छ न्नानंदनगरंययौ ॥ तत्रराजावीरसेनोनाम्नासर्वसमृद्धिमान् ॥ ३४ ॥ तत्कन्यामंगलागौरीसर्वलक्षणसंयुता ॥ वयोम ध्यगतारम्यारूपलावण्यशालिनी ॥ ३५ ॥ उपमानानिसर्वाणितुच्छीकृत्योदयंगता ॥ नगरोपवनेरम्येसखीभिःपरि वारिता ॥ ३६ ॥ ततस्तावपिसप्राप्तौचिरायुर्मातुलश्वसः ॥ विश्रांतिंप्रापतुस्तत्रतासांदर्शनलालसौ ॥ ३७ ॥ क्रीडं तीनांविनोदेनकुपितातत्रकाचन ॥ उवाचराजतनयांसारंडेत्यतिदुर्वचः ॥ ३८ ॥ श्रुत्वातदशुभंवाक्यमुवाचनृपनंदि नी ॥ अयोग्यंभाषसेत्वंकिंमत्कुलेनैवतद्विधा ॥ ३९ ॥ प्रसादान्मंगलागौर्यास्तद्व्रतस्यप्रभावतः ॥ मत्करादक्षताय स्यप्रपतिष्यंतिमूर्धनि ॥ ४० ॥ विवाहेसचिरायुःस्यादल्पायुरपिचेत्सखि ॥ ततःसमस्तास्ताःकन्याःस्वंस्वंवेश्मययु स्तदा ॥ ४१ ॥ तस्मिन्नेवदिनेराजकन्यायाःपाणिपीडने ॥ राज्ञोबाल्हिकदेशस्यदृढवर्माभिधस्यवै ॥ ४२ ॥ सुकेतुना म्नेपुत्रायदातुंसानिश्चिताभवत् ॥ ससुकेतुरविद्यश्चकुरूपोबधिरस्तथा ॥ ४३ ॥ ततस्तेमंत्रयामासुर्नैयोन्योऽद्यवरः परः ॥ अथसिद्धेविवाहेचसुकेतुस्तत्रगच्छतु ॥ ४४ ॥ ततश्चिरायुषंगत्वायाचिरेमातुलंप्रति ॥ देयोऽस्मभ्यमयंबा लःकार्यसिद्धिर्हिनोभवेत् ॥ ४५ ॥ परोपकारतुल्योहिधर्मोनास्त्यपरोभुवि ॥ मातुलस्तद्वचःश्रुत्वाअंतर्हृष्टमनाअभूत्

॥ ४६ ॥ पूर्वंश्रुतंचोपवनेकन्यावाक्यमनेनयत् ॥ एकवारंतथाप्याहयुष्माभिर्याच्यतेकथम् ॥ ४७ ॥ वस्त्रालंकरणा
दीनियाच्यंकार्यस्यसाधने ॥ नवरोयाच्यतेक्वापिदीयतेगौरवाद्विवः ॥ ४८ ॥ विवाहंसाधयामासुर्नीत्वातत्रचिरायुष
म् ॥ सप्तपद्यादिकेजातेरात्रौगौरीहरांतिके ॥ ४९ ॥ सहासौमंगलागौर्यासुतोहर्षसमन्वितः ॥ तदह्निषोडशाब्दानिस
माप्तानिचिरायुषः ॥ ५० ॥ निशीथेसर्परूपेणकालस्तत्रसमीयिवान् ॥ तदंतरेभूपसुताजागृतादैवयोगतः ॥ ५१ ॥
साददर्शमहासर्पंचकंपेभयविह्वला ॥ धैर्यंकृत्वातदाबालापूजयामाससोरगम् ॥ ५२ ॥ उपचारैःषोडशभिर्दुग्धंपातुंद
दौबहु ॥ प्रार्थयामासतंसर्पंदीनवाण्याचतुष्टुवे ॥ ५३ ॥ ययाचेमंगलागौरीकारिष्येव्रतमुत्तमम् ॥ जीव्यान्मेपतिरेत
स्माच्चिरंजीवेत्तथाकुरु ॥ ५४ ॥ एतस्मिन्नंतरेसर्पःकरकेप्रविवेशह ॥ कंचुक्यास्वीययासातुचक्रेतन्मुखबंधनम् ॥
॥ ५५ ॥ एतस्मिन्नंतरेभर्ताअंगमोटनपूर्वकम् ॥ जागृतश्चाऽब्रवीद्भार्यांक्षुधामांबाधतेप्रिये ॥ ५६ ॥ मातुःसकाशंग
त्वासाआनयामासपायसम् ॥ लड्डुकादिचतद्दत्तंबुभुजेप्रीतमानसः ॥ ५७ ॥ हस्तक्षालनकालेतुतद्धस्तान्मुद्रिकाऽ
पतत् ॥ तांबूलंभक्षयित्वातुप्रसुप्तःपुनरेवसः ॥ ५८ ॥ ततःसाकरकंत्यक्तुमगच्छत्तुविधेर्गतिः ॥ हारकांतिंबहिर्दृष्ट्वास्फु
रंतींविस्मयंययौ ॥ ५९ ॥ दृष्ट्वाघटस्थंतंहारंस्वकंठेचदधारसा ॥ किंचिन्निशावशेषेतुमातुलस्तंनिनायसः ॥ ६० ॥

ततस्तेवरपक्षीयाःसुकेतुंतत्रचानयन् ॥ दृष्ट्वातंमंगलागौरीउवाचायंनमेपतिः ॥ ६१ ॥ तामूचुस्तेततःसर्वेकिमि
दंभाषसेशुभे ॥ परिचायकमस्तीहकिंचित्तेतद्वदस्वनः ॥ ६२ ॥ मंगलागौर्युवाच ॥ ॥ मेदत्तंयेनरात्रौचनवरत्नांगु
लीयकम् ॥ अस्यांऽगुलौतन्निक्षिप्यपश्यध्वंपरिचायकम् ॥ ६३ ॥ पत्यादत्तोस्तिमेहारोरात्रौतद्रत्नसंचयः ॥ कीदृ
शोऽनेनवाच्योसौप्रतिवीरपरान्वितम् ॥ ६४ ॥ किंचाम्रसेचनंरात्रौतत्पदंकुंकुमान्वितम् ॥ ऊरौमेवर्ततेतच्चसर्वंपश्य
तमाचिरम् ॥ ६५ ॥ किंचरात्रौभाषणादिभक्षणादिचयत्कृतम् ॥ तदनेनचवक्तव्यंतदास्यान्मेपतिःस्वयम् ॥ ६६ ॥
एवंश्रुत्वातुतद्वाक्यंसाधुसाध्विवतिचाब्रवीत् ॥ एकस्यापिनयोगोभूत्तदासर्वैर्निषेधितः ॥ ६७ ॥ तदातेवरपक्षीयाज
ग्मुःसर्वेयथागतम् ॥ जनकोमंगलागौर्याःश्रुतकीर्तिःकुरूद्वहः ॥ ६८ ॥ अन्नपानादिकंसत्रंचकारसुमहामनाः ॥ वर
पक्षस्यवृत्तांतःश्रुतःकर्णोपकर्णतः ॥ ६९ ॥ स्वरूपस्यकुरूपत्वादानीतःकश्चनादृतः ॥ स्थापयामाससौधेतुकन्यां
जवनिकावृताम् ॥ ७० ॥ एवंगतेहायनेतुयात्रांकृत्वासमातुलः ॥ चिरायुःप्रययौतत्रकिंजातमवलोकितम् ॥ ७१ ॥
तंसाजालांतराद्दृष्ट्वालोकोत्तरमुदान्विता ॥ पितरौकथयामासममभर्तासमागतः ॥ ७२ ॥ सुहृद्गणंसमाहूयपूर्वोक्तंपरि
चायकम् ॥ दृष्ट्वासर्वमपिह्यस्मैददौकन्यांशुचिस्मिताम् ॥ ७३ ॥ शिष्टैःपरिणयोत्साहंकारयामासभूपतिः ॥ वस्त्राण्या

भरणादीनिसेनामश्वान्गजान्रथान् ॥ ७४ ॥ प्रस्थापयामासनृपोदत्त्वान्यदपिभूरिशः ॥ पत्न्यासहचिरायुःसमातुलेन समन्वितः ॥ ७५ ॥ स्वपुरंसेनयासार्धंजगामकुलनंदनः ॥ श्रुत्वाजनमुखात्तस्यआगतंपितरावुभौ ॥ ७६ ॥ विश्वासं लेभतुर्नैवस्यात्कथंदैवमन्यथा ॥ एतस्मिन्नंतरेप्राप्तःपित्रोरंतिकमेवसः ॥ ७७ ॥ पपातपादयोर्भक्त्यापित्रोःस्नेहपरि प्लुतः ॥ मूर्ध्न्यवघ्रायतंपुत्रंपरमांमुदमापतुः ॥ ७८ ॥ स्नुषापिमंगलागौरिश्वशुरौप्रणनामसा ॥ अंकेनिवेश्यतांश्वश्रूः पप्रच्छोदंतमंजसा ॥ ७९ ॥ स्नुषापिमंगलागौर्याव्रतमाहात्म्यमुत्तमम् ॥ कथयामासतत्सर्वंयथावृत्तंमहामुने ॥ ८० ॥ इत्येतत्कथितंतुभ्यंमंगलागौरिकाव्रतम् ॥ यएतच्छृणुयात्कश्चिद्यश्चापिपरिकीर्तयेत् ॥ ८१ ॥ मनोरथास्तस्यस वैंसिद्ध्यन्त्यत्रनसंशयः ॥ ८२ ॥ ॥ सूतउवाच ॥ ॥ सनत्कुमारमित्येवंकथयामासधूर्जटिः ॥ सचानंदंपरंलेभेश्रुत्वा कार्यकरंव्रतम् ॥ ८३ ॥ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येमंगलागौरीव्रतकथ नंनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

ईश्वरउवाच ॥ ॥ बुधगुर्वोरथोवक्ष्येव्रतंपापप्रणाशनं ॥ यत्कृत्वाश्रद्धयामर्त्यःपरांसिद्धिमवाप्नुयात् ॥ १ ॥ प्रजापतिः शीतरश्मिंद्विजराजेभ्यषेचयत् ॥ सकदाचिद्गुरोर्भार्यांतारानाम्नींददर्शह ॥ २ ॥ रूपयौवनसंपन्नांलावण्यमदगर्वि

ताम् ॥ मोहितोरूपसंपत्त्याकामबाणवशंगतः ॥ ३ ॥ स्वगृहेस्थापयित्वातुबलात्सबुभुजेचताम् ॥ एवंबहुतिथेका
लेगतेपुत्रोबभूवह ॥ ४ ॥ बुधोविद्वान्रूपशालीसर्वलक्षणसंयुतः ॥ अन्वेषयन्गुरुःपत्नींज्ञातवाञ्शशिसद्मनि ॥
॥ ५ ॥ ययाचेदेहिमेभार्यांत्वंकथंगुरुतल्पगः ॥ गुरुतल्पकृतात्पापान्निष्कृतिस्तेकथंभवेत् ॥ ६ ॥ महापातक
संयोगेकथंतेबुद्धिरादृता ॥ गुप्तमेवप्रयच्छेमांगुरुभार्यांममप्रियाम् ॥ ७ ॥ प्रायश्चित्तंचरहसिकृत्वानिष्कल्मषोभव॥
नोचेदिंद्रसमीपेतेआगःसंकथयाम्यहम् ॥ ८ ॥ इत्येवंबहुधोक्तोपिनददौतांकलंकितः ॥ तदादेवसभांगत्वाकथया
मासगीष्पतिः ॥ ९ ॥ चंद्रेणमेह्यपहृतांभार्यांतांनददातिसः ॥ देवराजोसिशक्रत्वंदापनीयात्वयाज्ञया ॥ १० ॥
नचेत्त्वांतत्कृतंपापंसंक्रमिष्यत्यसंशयम् ॥ राजाराष्ट्रकृतंपापंभुंक्तेशास्त्रविनिर्णयात् ॥ ११ ॥ दुर्बलस्यबलंराजापु
राणेत्विति भण्यते ॥ इतिश्रुत्वागुरोर्वाक्यंचंद्रमाहूयवासवः ॥ १२ ॥ आज्ञापयामासरुषादेहिभार्यांगुरोर्विधो ॥ अन्य
दाराभिगमनंनमहापातकंभवेत् ॥ १३ ॥ गुरुदाराभिगमनंमहापातकसंज्ञितं ॥ तस्माच्चंद्रगुरोर्भार्यांदेहित्वमविचा
रयन् ॥ १४ ॥ देवेंद्रवचनंश्रुत्वानिशापतिरथाब्रवीत् ॥ दास्येत्वदाज्ञयाभार्यांपुत्रंनैवददाम्यहम् ॥ १५ ॥ मत्स
काशात्सुतोजातोममवैभवयुग्यतः ॥ गीष्पतिस्त्वाहमत्तोभूत्ततःसंशयिताःसुराः ॥ १६ ॥ ततस्तेनिर्णयंचक्रुर्मातारजा

नातिचांगजम् ॥ पप्रच्छुस्तेतदातारांकेनायंगर्भआहितः ॥ १७ ॥ सत्यंवदस्वकल्याणिनमिथ्यावक्तुमर्हसि ॥ तदा
लज्जान्वितातारात्रौरसोयंविधोःसुतः ॥ १८ ॥ गीष्पतेःक्षेत्रजश्चातोयोग्यःस्यात्तस्यदीयताम् ॥ शास्त्रतस्तेविचा
र्यथददुश्चंद्रायतंबुधम् ॥ १९ ॥ तदाखिन्नंगुरुंदृष्ट्वाददौदेवावरंतयोः ॥ गच्छस्वत्वंचंद्रगृहंतवाप्यस्तिसुतोह्ययम् ॥
॥ २० ॥ चंद्रस्यगीष्पतेश्चायंग्रहत्वंयात्वसौसुतः ॥ अन्यच्चापिसुराचार्यगृहाणेमंवरंशुभम् ॥ २१ ॥ यःकरिष्यति
मेधावीमिलित्वायुवयोर्व्रतम् ॥ तस्यस्यात्सकलासिद्धिःसत्यंसत्यंनसंशयः ॥ २२ ॥ श्रावणेमासिसंप्राप्तेशंकरस्य
महाप्रिये ॥ बुधगुर्वोर्वासरयोर्येकरिष्यंतिपूजनम् ॥ २३ ॥ नैवेद्यंदधिभक्तेनसाधनेमूलकंभवेत् ॥ युवयोर्मूर्तिमा
लिख्यस्थानभेदात्फलंलभेत् ॥ २४ ॥ बालांदोलोपरिस्थानेलिखित्वापूजयेद्यदि ॥ सपुत्रंलभतेदीर्घायुषंसर्वगुणा
न्वितम् ॥ २५ ॥ कोशागारेलिखित्वातुपूजयेद्यदिमानवः ॥ तस्यकोशाविवर्धतेक्षीयंतेनकदाचन ॥ २६ ॥ पाकागा
रेपाकवृद्धिर्देवागारेतुतत्कृपा ॥ शय्यागारेपूजनेतुस्त्रीवियोगोनकर्हिचित् ॥ २७ ॥ धान्यागारेधान्यवृद्धिरेवंतत्तत्फलं
लभेत् ॥ सप्तवर्षाणिकृत्वैवंततउद्यापनंचरेत् ॥ २८ ॥ अधिवास्याह्निपूर्वस्मिन्रात्रौजागरणंचरेत् ॥ सुवर्णप्रति
मांकृत्वापूजयित्वायथाविधि ॥ २९ ॥ उपचारैःषोडशभिस्ततोहोमंसमाचरेत् ॥ तिलैराज्येनचरुणातथैवचसमि

द्वजैः ॥ ३० ॥ अपामार्गाश्वत्थमयैस्ततः पूर्णाहुतिंचरेत् ॥ स्वस्त्रीयमातुलौचैवभोजनीयौप्रयत्नतः ॥ ३१ ॥ ब्रा ह्मणान्भोजयेदन्यान्भुंजीतस्वयमेवच ॥ एवंकृतेसप्तवर्षैसर्वान्कामानवाप्नुयात् ॥ ३२ ॥ विद्याकामनयाकु र्याद्वेदशास्त्रार्थविद्भवेत् ॥ बुधस्तुबुधतांदद्याद्गुरुस्तुगुरुतांतथा ॥ ३३ ॥ सनत्कुमारउवाच ॥ भगवन्यत्त्वयाप्रोक्तं भोज्यौस्वस्त्रीयमातुलौ ॥ एतन्निमित्तंकथययदिवक्तुंक्षमंभवेत् ॥ ३४ ॥ ईश्वरउवाच ॥ पुराकौचिद्द्विजन्मानौदीनौ स्वस्त्रीयमातुलौ ॥ दरिद्रौपर्यटंतौतावुदरार्थंकृतश्रमौ ॥ ३५ ॥ कस्मिंश्चिन्नगरेम्येगतौधान्यंप्रयाचितुं ॥ गृहेगृहे पश्यतांतौश्रावणेमासितद्व्रतम् ॥ ३६ ॥ तत्तद्वारेव्रतंतत्तद्बुधगुर्वोर्नकुत्रचित् ॥ अन्योन्यंतौतदातत्रविचारंचक्रतु श्चिरात् ॥ ३७ ॥ वासराणांतुसर्वेषांव्रतंसर्वत्रदृश्यते ॥ बुधगुर्वोविनातस्मादावाभ्यांतद्व्रतंशुभम् ॥ ३८ ॥ अनुच्छि ष्टंयतश्चास्तितस्मात्कर्तव्यमादरात् ॥ विध्यज्ञानात्परंतस्यसंशयंप्रापतुःपुनः ॥ ३९ ॥ तावत्तस्यांनिशायांतुस्व प्नोभूद्विधिदर्शनः ॥ तथातौचक्रतुःपश्चात्परांसंपदमापतुः ॥ ४० ॥ प्रत्यहंवृद्धिगाचाभूत्संपत्तिःसर्वगोचरा ॥ एवंकृत्वा सप्तवर्षंपुत्रपौत्रादिसंयुतौ ॥ ४१ ॥ साक्षाद्भूतौबुधगुरूवरंचददतुस्तयोः ॥ आवाभ्यामावयोर्यस्माद्व्रतमेतत्प्रवर्तित म् ॥ ४२ ॥ इतिचारभ्यतस्माद्यःकरिष्यतिशुभंव्रतम् ॥ स्वस्त्रीयमातुलौतेनभोजनीयौप्रयत्नतः ॥ ४३ ॥ एतद्व्र

तत्प्रभावेणसर्वसिद्धिःपराभवेत् ॥ अंतेचास्मल्लोकवासोयावच्चंद्रदिवाकरौ ॥ ४४ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कु
मारसंवादेश्रावणमासमाहात्म्येबुधगुरुव्रतकथनंनामाष्टमोऽध्यायः ॥८॥ ॥ छ ॥ ॥ छ ॥ ॥छ॥
॥ ईश्वरउवाच ॥ ॥ अतःपरंप्रवक्ष्यामिशुक्रवारकथानकं ॥ यच्छ्रुत्वाश्रद्धयामर्त्योमुच्यतेसर्वसंकटात् ॥ १ ॥ अ
त्रैवोदाहरंतीममितिहासंपुरातनं ॥ सुशीलोनामराजासीत्पांड्यवंशसमुद्भवः ॥ २ ॥ बहुप्रयत्नशीलोपिअपत्यंनैवचा
प्तवान् ॥ तस्यभार्यासुकेशीतिनाम्नासर्वगुणान्विता ॥ ३ ॥ अपत्यंनयदालेभेमहाचिंतामवापसा ॥ स्त्रीस्वभावात्तदाव
स्त्रखंडानिप्रतिमासिके ॥ ४ ॥ बध्वोदरंमहच्चक्रेमहासाहसमानसा ॥अन्वैषयद्गर्भिणींसास्वप्रसूत्यनुसारिणीम् ॥५॥
भाविनादैवयोगेनगृहिणीतत्पुरोधसः ॥ गर्भिण्यासीत्तदाराज्ञःपत्नीकपटकारिणी ॥ ६ ॥ प्रसूतिकारिणींकांचित्तत्कार्ये
सान्ययोजयत् ॥ दत्त्वाबहुधनंतस्यैसूतिकायैरहोगता ॥ ७ ॥ राजाचक्रेपुंसवनंतथैवानवलोभनं ॥ सीमंतो
न्नयनेकालेमहाहर्षसमन्वितः ॥ ८ ॥ तस्याःप्रसूतिसमयंश्रुत्वासापितथाकरोत् ॥ आद्यगर्भवतीयस्मात्सापुरोधःकु
टुंबिनी ॥ ९ ॥ अज्ञाप्रसूतिकाकृत्येसूतिकावचनेस्थिता ॥ तांसूतिकांवंचयंतीचक्रेतन्नेत्रबंधनम् ॥ १० ॥ प्रेषयामा
सतंपुत्रंसाराजमहिषींप्रति ॥ कस्यचिद्धस्ततःशीघ्रमज्ञातमपिकेनचित् ॥११॥ राज्ञीगृहीत्वातंपुत्रंप्रसूतास्मित्यघो

षयत् ॥ पुरोधःस्त्रीनेत्रबंधंमोक्षयामाससूचिका ॥ १२ ॥ सहानीतंमांसपिंडंतस्यैप्रादर्शयच्चसा ॥ विस्मयंचैवखेदंच
स्वयंचक्रेतदग्रतः ॥ १३ ॥ किमरिष्टमिदंजातंपत्याकार्यंचशांतिकं ॥ संततिर्नास्तिचेन्मास्तुस्वदिष्ट्याजीविता
स्मिभोः ॥ १४ ॥ परंसंशयितासासीत्प्रसवस्पर्शचिंतनात् ॥ १५ ॥ ईश्वरउवाच ॥ राजाश्रुत्वापुत्रजन्मजातकर्माद्य
कारयत् ॥ गजानश्वान्रथांश्चैवब्राह्मणेभ्योददौनृपः ॥ १६ ॥ बद्धान्कारागृहेसर्वान्मोचयामासहर्षितः ॥ सूतकांतेना
मकर्मसंस्कारान्सर्वतोकरोत् ॥ चक्रेप्रियव्रतइतिनामपुत्रस्यभूमिपः ॥ १७ ॥ श्रावणेमासिसंप्राप्तेपुरोधोदयितासती ॥
जीवंतिकांशुक्रवारेपूजयामासभक्तितः ॥ १८ ॥ कुड्येविलिख्यतन्मूर्तिंबहुबालसमन्वितां ॥ पुष्पमालिकयापूज्यपं
चदीपैरदीपयत् ॥ १९ ॥ गोधूमपिष्टसंभूतैस्तानभक्षयतस्वयम् ॥ अक्षतांश्चैवचिक्षेपयत्रमेबालकोभवत् ॥ २० ॥ त
त्त्वयारक्षणीयोजीवंतिकरुणार्णवे ॥ इतिप्रार्थ्यकथांश्रुत्वानमश्चक्रेयथाविधि ॥ २१ ॥ जीवंतिकाप्रसादेनदीर्घायुर्बा
लकोभवत् ॥ ररक्षतमहोरात्रंदेवीतन्मातृगौरवात् ॥ २२ ॥ एवंकालेगतेराजाकालधर्ममुपेयिवान् ॥ पितृभक्तोऽथत
त्पुत्रश्चक्रेतत्सांपरायिकम् ॥ २३ ॥ प्रियव्रतोभिषिक्तोभूद्राज्येमंत्रिपुरोहितैः ॥ पालयित्वाप्रजाराज्यंभूक्त्वासकतिंचि
त्समाः ॥ २४ ॥ पित्रर्णस्यविमोक्षायगयांगंतुंप्रचक्रमे ॥ राज्यभारममात्येषुस्थाप्यवृद्धेषुभक्तितः ॥ २५ ॥ राजभावं

परित्यज्यवेषंकार्पटिकंदधे ॥ मार्गमध्येक्कचित्पुर्यांकस्याचिद्गृहमेधिनः ॥ २६ ॥ चक्रेवासंगृहेतस्यप्रसूतागृहिणीत्व
भूत् ॥ पुराषष्ठ्याः पंचमेऽन्हितत्पुत्राः पंचमारिताः ॥ २७ ॥ तदापिपंचमदिनमासीत्तत्रनृपोगतः ॥ रात्रौसुप्तेनृपेषष्ठी
बालंनेतुंसमागता ॥ २८ ॥ जीवंत्यावारितासातुनृपमुल्लंघ्यमाव्रज ॥ षष्ठीनिषेधाज्जीवंत्यासाजगामयथागता ॥ २९ ॥ जी
वितंपंचमदिनेबालंलेभेगृहाधिपः ॥ एतत्प्रभावःप्रायोयंप्रार्थयामासतंनृपम् ॥ ३० ॥ राजन्नद्यतनेचाह्नितववासोस्तुमे
गृहे ॥ तवप्रसादान्मेबालःषष्ठोयंजीवितःप्रभो ॥ ३१ ॥ एवंसंप्रार्थितस्तेनउवाचकरुणानिधिः ॥ ततोगतोगयांराजा
प्रवृत्तःपिंडपातने ॥ ३२ ॥ विष्णुपादेतत्रकिंचिद्दत्त्वाश्चर्यमभूत्तदा ॥ पिंडस्यग्रहणार्थंहिनिःसृतंतुकरद्वयम् ॥ ३३ ॥
परंविस्मयमापन्नःसंशयंप्रापभूपतिः ॥ ब्राह्मणानुमतःपश्चात्पिंडंविष्णुपदेददौ ॥ ३४ ॥ पप्रच्छब्राह्मणंकंचिज्ज्ञा
निनंसत्यवादिनम् ॥ सचाहब्राह्मणस्तस्मैपितृद्वयकराविमौ ॥ ३५ ॥ किमिदंतद्गृहेगत्वामात्रेपृच्छवदिष्यति ॥ तत
श्चितातुरोदुःखीहृदिनानाविचारयत् ॥ ३६ ॥ यात्रांकृत्वातत्रयातोयत्रासौजीवितःशिशुः ॥ तदापिपंचमदिनमासीत्सैवप्र
सूतिका ॥ ३७ ॥ द्वितीयोप्यभवत्पुत्रोरात्रौषष्ठीसमाययौ ॥ पुनश्चजीवंतिकयानिषिद्धासाब्रवीच्चताम् ॥ ३८ ॥ एत
स्यावश्यकंकिंतेएतन्मात्राचकिंव्रतं ॥ क्रियतेहियतस्त्वंचएनंरक्षस्यहर्निशम् ॥ ३९ ॥ षष्ठीवाक्यमितिश्रुत्वाजीवंती

प्राहसुस्मिता ॥ तन्निमित्तेनिशिद्रष्टुंजाग्रदासीन्मृषास्वपन् ॥ ४० ॥ संवादमुभयोराजासुश्रावसकलंतदा ॥ श्रावणे भृगुवारेतुएतन्मातामार्चने ॥ ४१ ॥ व्रतस्यनियमंसर्वंकुरुतेतंवदामिते ॥ परिधत्तेनवसनंहरितंकंचुकींतथा ॥ ॥ ४२ ॥ नधारयतितद्वर्णंकाचकंकणकंकरे ॥ कदापिनोल्लंघयतितंदुलक्षालनोदकम् ॥४३ ॥नैवगच्छत्यधस्ताच्चह रित्पल्लवमंडपं ॥ कूकलस्यचशाकंसानाश्नातिहरिवर्णतः ॥ ४४ ॥ सर्वमेवममप्रीत्यैमारयिष्यामिमासुतं ॥ श्रुत्वासर्वं नृपःप्रातर्जगामस्वपुरंप्रति ॥ ४५ ॥ प्रत्युद्गतानागरिकादैशिकाःसर्वएवहि ॥ पप्रच्छमातरंराजात्वयाजीवंतिकाव्रत म् ॥ ४६ ॥ क्रियतेतुकथंमातर्नवेद्मीतिचसाब्रवीत् ॥ साद्गुण्यार्थंतुयात्रायांब्राह्मणांश्वसुवासिनीः ॥ ४७ ॥ इच्छन्नृपो भोजयितुंव्रतंचापिपरीक्षितुं ॥ सुवासिनीभ्योवस्त्राणिकंचुक्यःकंकणानिच ॥ ४८ ॥ आगंतव्यंभोजनार्थंसर्वाभीराज सद्मनि ॥ ततःपुरोधसःपत्नीतत्रदूतमुवाचह ॥ ४९ ॥ हरिद्वर्णमयाकिंचिद्धृह्यतेनकदाचन ॥ दूतोनिवेदयामास राज्ञेतस्याःप्रभाषितम् ॥ ५० ॥ राजासर्वंरक्तवर्णंतस्यैसंप्रेषयच्छुभम् ॥ अंगीकृत्यचतत्सर्वंसापिराजगृहंययौ ॥ ॥ ५१ ॥ पूर्वद्वारेतंडुलानांदृष्ट्वाक्षालनजंजलम् ॥ मंडपंचहरिद्वर्णंदृष्ट्वान्यद्वारतोययौ ॥ ५२ ॥ राजापुरोधसःपत्नींन त्वापप्रच्छचाखिलं ॥ निमित्तंनियमस्यास्यसाप्रोवाचव्रतंभृगौ ॥ ५३ ॥ तंदृष्ट्वातुतदात्यंतंप्रस्नुतौतत्पयोधरौ ॥ रा

जानंतंसिषिचतुर्धाराभिःसर्वतस्तनौ ॥ ५४ ॥ गयायांकरयुग्मेनदेव्याःसंवादतस्तथा ॥ स्तनयोःप्रस्रवाच्चैवराजाप्र
त्ययमापसः ॥ ५५ ॥ पालिकांमातरंगत्वापप्रच्छाविनयान्वितः ॥ माभैर्मातर्ब्रूहिसत्यंवृत्तांतंममजन्मनः ॥ ५६ ॥
श्रुत्वासुकेशिनीप्राहयाथातथ्येनसर्वशः ॥ हृष्टोभूत्वानमश्चक्रेपितरौस्वस्यजन्मदौ ॥ ५७ ॥ संपत्त्यावर्धयामा
सतौपरांमुदमापतुः ॥ एकस्मिन्दिवसेराजाजीवंतींप्रार्थयेन्निशि ॥ ५८ ॥ जीवत्ययंजन्मदोमेगयायांचकरौकथम् ॥
तदास्वप्नगतादेवीप्राहसंशयनाशकम् ॥ ५९ ॥ मयात्वत्प्रत्ययार्थैयंकृत्वामायानसंशयः ॥ एतत्तेसर्वमाख्यातंश्रावणे
भृगुवासरे ॥ ६० ॥ एतव्रतमनुष्ठायसर्वान्कामानवाप्नुयात् ॥ ६१ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रा
वणमासमाहात्म्येशुक्रवारजीवंतिकाव्रतकथनंनामनवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ छ ॥
ईश्वरउवाच ॥ ॥ अतःपरंप्रवक्ष्यामिमंदवारविधिंतव ॥ सनत्कुमारयत्कृत्वामंदत्वंनैवजायते ॥ १ ॥ श्रावणेमासि
देवानांत्रयाणांपूजनंशनौ ॥ नृसिंहस्यशनेश्चैवअंजनीनंदनस्यच ॥ २ ॥ कुड्येस्तंभेथवालिख्यनृसिंहप्रतिमांशु
भाम् ॥ हरिद्रायुक्चंदनेनलक्ष्म्यासहजगत्पतिम् ॥ ३ ॥ संपूज्यनीलपुष्पैश्चरक्तैःपीतैश्चशोभनैः ॥ नैवेद्यंखिच्चडीसं
ज्ञंशाकंकुंजरसंज्ञितम् ॥४॥ स्वयंचैवतदश्नीयाद्ब्राह्मणांश्चैवभोजयेत् ॥तिलतैलंघृतस्नानंनृसिंहस्यप्रियंभवेत् ॥५॥

शनैश्वरदिनेतैलंप्रशस्तंसर्वकर्मसु ॥ अभ्यज्याब्राह्मणास्तद्वत्सुवासिन्यस्तुतैलतः ॥ ६ ॥ स्वयमभ्यज्यचस्नायात्कु
टुंबसहितःशनौ ॥ माषान्नंचप्रकर्तव्यंप्रीणातिनरकेसरी ॥ ७ ॥ एवंचतुर्षुवारेषुश्रावणेमासितद्व्रतम् ॥ कुर्वतस्तस्य
सदनेलक्ष्मीःस्थिरतराभवेत् ॥ ८ ॥ धनधान्यसमृद्धिश्चअपुत्रःपुत्रवान्भवेत् ॥ इहलोकेसुखंभुक्त्वाअंतेवैकुंठमाप्नुया
त् ॥ ९ ॥ दिग्व्यापिनीचसत्कीर्तिर्नृसिंहस्यप्रसादतः ॥ एतत्तेकथितंसौम्यनृसिंहव्रतमुत्तमम् ॥ १० ॥ एवंशनि
प्रीणनयाकर्तव्यंतच्छृणुष्वभो ॥ खंजंब्राह्मणमेकंतुतदभावेतुकंचन ॥ ११ ॥ अभ्यज्यतिलतैलेनस्नापयेदुष्णवारि
णा ॥ नृसिंहोक्तेनचान्नेनभोजयेच्छ्रद्धयान्वितः ॥ १२ ॥ तैलंलोहंतिलान्माषान्दद्यात्कंबलमेवच ॥ शनैश्वरप्रीण
नायशनिर्मेप्रीयतामिति ॥ १३ ॥ शनैश्वरस्याभिषेकंतिलतैलेनकारयेत् ॥ प्रशस्ताअक्षतास्तस्यपूजनेतिलमा
षयोः ॥ १४ ॥ ध्यानंतस्यचवक्ष्यामिशृणुष्वावहितोमुने ॥ शनैश्वरःकृष्णवर्णोमंदःकाश्यपगोत्रजः ॥ १५ ॥ सौ
राष्ट्रदेशसंभूतःसूर्यपुत्रोवरप्रदः ॥ दंडाकृतिर्मंडलेस्यादिंद्रनीलसमद्युतिः ॥ १६ ॥ बाणबाणासनधरःशूलधृग्गृध्र
वाहनः ॥ यमाधिदैवतश्चैवब्रह्मप्रत्यधिदैवतः ॥ १७ ॥ कस्तूर्यगुरुगंधःस्यात्तथागुग्गुलुधूपकः ॥ कृसरान्नप्रियश्चै
वविधास्यःपरिकीर्तितः ॥ १८ ॥ प्रतिमापूजनेचास्यकार्यालोहमयीशुभा ॥ अस्योद्देशेनपूजायांदानंकृष्णंद्विजो

श्रा०मा० त्तम ॥ १९ ॥ कृष्णवस्त्रयुगंदद्याद्द्यात्कांकृष्णवत्सकाम् ॥ एवंसंपूज्यविधिवत्प्रार्थयेच्चस्तुवीतच ॥ २० ॥ यःपुन अ०
॥१९॥ र्नष्टराज्यायनीलायपरितोषितः ॥ ददौनिजंमहाराज्यंसमेसौरिःप्रसीदतु ॥ २१ ॥ शनिंनीलांजनंप्रख्यंमंदचेष्टा १०
प्रसारिणम् ॥ छायामार्तंडसंभूतंतन्नमामिशनैश्वरम् ॥ २२ ॥ नमस्तेकोणसंस्थायपिंगलायनमोस्तुते ॥ प्रसादं
कुरुदेवेशदीनस्यप्रणतस्यच ॥ २३ ॥ एवंस्तुत्याप्रार्थयित्वाप्रणमेच्चपुनःपुनः ॥ पूजनेवैदिकोमंत्रःशन्नोदेवीरिति
स्मृतः॥२४॥त्रैवर्णानांचशूद्राणां नाममंत्रःप्रकीर्तितः॥यएवंविधिनामंदंपूजयेत्सुसमाहितः॥२५॥तदीयंतुभयंतस्य
स्वप्नेपिनभविष्यति ॥ एवमेतद्व्रतंविप्रयेकरिष्यंतिमानवाः ॥ २६ ॥ वासरेवासरेप्राप्तेश्रावणेमासिभक्तितः॥ तेषां
शनैश्वरकृतःपीडालेशोपिनोभवेत्॥२७ ॥ प्रथमोवाद्वितीयोवाचतुर्थःपंचमोपिवा ॥ सप्तमश्चाष्टमोवापिनवमोद्वादशो
पिवा॥ २८ ॥ जन्मराशेःस्थितोमंदःपीडांचकुरुतेसदा ॥ शमग्निरितिमंत्रस्यतत्प्रसादेजपोमतः॥२९॥इंद्रनीलम
णेर्दानंप्रदद्यात्तस्यतुष्टये ॥ अतःपरंप्रवक्ष्यामिहनुमत्तुष्टयेविधिम् ॥ ३० ॥ शनिवारेश्रावणेचअभिषेकंसमाचरेत्॥
रुद्रमंत्रेणतैलेनहनुमत्प्रीणनायच ॥ ३१ ॥ तैलेमिश्रितसिंदूरलेपंतस्यसमर्पयेत् ॥ जपाकुसुममालाभिरर्कमाला ॥१९॥
भिरेवच ॥ ३२ ॥ मालाभिर्मांदराभिश्चवटकानांतथैवच ॥ पूजयेदंजनीपुत्रंतथान्यैरुपचारकैः॥ ३३ ॥ यथाविधि

यथावित्तंश्रद्धाभक्तिसमन्वितः ॥ जपेद्द्वादशनामानिहनुमत्प्रीतयेबुधः ॥ ३४ ॥ हनुमानंजनीसूनुर्वायुपुत्रोमहाबलः॥
रामेष्टःफाल्गुनसखःपिंगाक्षोऽमितविक्रमः ॥ ३५ ॥ उदधिक्रमणश्चैवसीताशोकविनाशकः ॥ लक्ष्मणप्राणदाता
चदशग्रीवस्यदर्पहा ॥ ३६ ॥ द्वादशैतानिनामानिप्रातरुत्थाययःपठेत् ॥ नाशुभंजायतेतस्यसर्वसंपत्प्रजायते ॥
॥ ३७ ॥ श्रावणेमंदवारेतुएवमाराध्यवायुजम् ॥ वज्रतुल्यशरीरःस्यादरोगोबलवान्नरः ॥ ३८ ॥ वेगवान्कार्यक
रणेबुद्धिवैभवभूषितः ॥ शत्रुःसंक्षयमाप्नोतिमित्रवृद्धिःप्रजायते ॥ ३९ ॥ वीर्यवान्कीर्तिमांश्चैवप्रसादादंजनीजनेः॥
आंजनेयालयेलक्षंहनुमत्कवचंपठेत् ॥ ४० ॥ अणिमाद्यष्टसिद्धीनांसाधकःस्वामितामियात् ॥ यक्षराक्षसवेतालाद
र्शनात्तस्यवेगतः ॥ ४१ ॥ पलायंतेदशदिशःकंपिताभयविह्वलाः ॥ अश्वत्थालिंगनंचैवअश्वत्थस्यचपूजनम् ॥ ४२॥
मंदभिन्नेनकर्तव्यःस्पर्शोऽश्वत्थस्यसत्तम ॥ शनावालिंगनंतस्यसर्वसंपत्समृद्धिदम् ॥ पूजनंसप्तवारेषुतत्रापिश्रावणे
विकम् ॥ ४३ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येशनैश्वरनृसिंहहनुमत्पूजनादि
शनैश्वरकृत्यकथनंनामदशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
सनत्कुमारउवाच ॥ ॥ वारव्रतानिसर्वाणित्वत्तोदेवश्रुतानिमे ॥ तववागमृतंपीत्वातृप्तिर्मेनैवजायते ॥ १ ॥ श्राव

णेनसमोमासोनास्त्यन्यःप्रतिभातिमे ॥ अथातस्तिथिमाहात्म्यंकथयस्वजगत्प्रभो ॥ २ ॥ ईश्वरउवाच ॥ मासानां
कार्तिकःश्रेष्ठस्तस्मान्माघःपरोमतः ॥ ततोऽपिमाधवःश्रेष्ठःसहश्चापिहरिप्रियः ॥ ३ ॥ विश्वरूपेणचत्वारोमासाश्चैते
ममप्रियाः ॥ द्वादशस्वपिमासेषुश्रावणःशिवरूपकः ॥ ४ ॥ तिथयःश्रावणेमासिसर्वाश्चव्रतसंयुताः ॥ प्राधान्यत
स्तथापित्वांवच्मिकाश्चित्सुशोभनाः ॥ ५ ॥ तिथिवारविमिश्रंतुव्रतंमासेवदामिते ॥ प्रतिपच्छ्रावणेमासियदासोमयु
ताभवेत् ॥ ६ ॥ सोमवारास्तदापंचपतंत्यत्रहिमासिके ॥ रोटकाख्यंव्रतंतत्रकर्तव्यंश्रावणेनरैः ॥ ७ ॥ सार्धमास
त्रयंवापिरोटकाख्यंव्रतंभवेत् ॥ लक्ष्मीवृद्धिकरंप्रोक्तंसर्वकामार्थसिद्धिदम् ॥ ८ ॥ विधानंतस्यवक्ष्यामिशृणुष्वावहि
तोमुने ॥ श्रावणस्यसितेपक्षेप्रतिपत्सोमवासरे ॥ ९ ॥ प्रातःसंकल्पयेद्विद्वान्करिष्येरोटकव्रतम् ॥ अद्यारभ्यसुरश्रे
ष्ठकृपांकुरुजगद्गुरो ॥ १० ॥ दिने दिनेप्रकर्तव्यापुजादेवस्यशूलिनः ॥बिल्वपत्रैरखंडैश्चतुलसीपत्रकैस्तथा॥ ११ ॥
नीलोत्पलैश्चकमलैःकल्हारैःकुसुमैस्तथा ॥ चंपकैर्मालतीपुष्पैःकुर्विंदैरर्कपुष्पकैः ॥ १२ ॥ अन्यैर्नानाविधैःपुष्पै
र्ऋतुकालोद्भवैःशुभैः ॥ धूपैर्दीपैश्चनैवेद्यैःफलैर्नानाविधैरपि ॥ १३ ॥ नैवेद्यमर्पयेन्मुख्यंरोटकानांविशेषतः ॥ क
र्तव्यारोटकाःपंचपुरुषाहारमानतः ॥ १४ ॥ द्वौतुविप्रायदातव्यौद्वाभ्यांवैभोजनंमतम् ॥ एकोदेवायदातव्योनैवे

द्यार्थंसदाबुधैः ॥ १५ ॥ शेषपूजांविधायाथअर्घ्यंदद्याद्विचक्षणः ॥ रंभाफलंनारिकेलंजंबीरंबीजपूरकम् ॥ १६ ॥ ख
र्जूरीकर्कटीद्राक्षानारिंगंमातुलुंगकम् ॥ अक्षोटकंचदाडिंबंयच्चान्यदृतुसंभवम् ॥ १७ ॥ प्रशस्तमर्घ्यदानेस्यात्तस्यपु
ण्यफलंशृणु ॥ सप्तसागरसंयुक्तांभूमिंदत्त्वातुयत्फलम् ॥ १८ ॥ तत्फलंसमवाप्नोतिव्रतंकृत्वाविधानतः ॥ पंचवर्षंप्र
कर्तव्यमतुलंधनमीप्सुभिः ॥ १९ ॥ पश्चादुद्यापनंकुर्याद्रोटकाख्यव्रतस्यतु ॥ उद्यापनेतुकर्तव्यौहेमरूप्यौचरोट
कौ ॥ २० ॥ पूर्वेद्युरधिवास्याथप्रातर्होमंसमाचरेत् ॥ सर्पिषाशिवमंत्रेणबिल्वपत्रैश्चशोभनैः॥ २१ ॥ एवंकृतेव्रतेतात
सर्वान्कामानवाप्नुयात्॥सनत्कुमारवक्ष्यामिद्वितीयायांव्रतंशुभम्॥ २२॥यत्कृत्वाश्रद्धयामर्त्योलक्ष्मीवान्पुत्रवान्भवेत्
॥औदुंबराभिधंचैवतद्व्रतंपापनाशनम्॥२३॥श्रावणेमासिसंप्राप्तेद्वितीयायांशुभेतिथौ॥प्रातःसंकल्प्यविधिवद्व्रतंकुर्या
द्विचक्षणः ॥ २४ ॥ नारीवाथनरोवापिपात्रंस्यात्सर्वसंपदाम् ॥ साक्षादुदुंबरःपूज्यस्तदभावेतुकुड्यके ॥ २५ ॥ लिखि
त्वापूजयेत्तत्रचतुर्भिर्नाममंत्रकैः ॥ उदुंबरनमस्तुभ्यंनमस्तेहेमपुष्पक ॥ २६ ॥ सजंतुफलयुक्तायनमोरक्तांडशालि
ने ॥ तत्राधिदेवतेपूज्येशिवःशुक्रस्तथैवच ॥ २७॥ त्रयस्त्रिंशत्फलान्यस्यगृहीत्वाभागमाचरेत् ॥ एकादशब्राह्मणाय
दद्यात्तावंतिदैवते ॥ २८॥ तावंतिस्वयमश्नीयान्नान्नहारस्तुतद्दिने ॥ शिवंशुक्रंचसंपूज्यरात्रौजागरणंचरेत् ॥ २९ ॥

एवंकृत्वाव्रतंतातवर्षाण्येकादशैवतु ॥ पश्चादुद्यापनंकुर्याद्व्रतसंपूर्णहेतवे ॥ ३० ॥ उदुंबरःसुवर्णेनफलपुष्पदलान्वि
तः ॥ तत्रसंपूजयेद्विद्वान्प्रतिमेशिवशुक्रयोः ॥ ३१ ॥ प्रातर्होमंचरेच्चैवउदुंबरफलैःशुभैः ॥ कोमलैरल्पमात्रैश्वसंख्य
याष्टोत्तरंशतम् ॥ ३२ ॥ उदुंबरसमिद्भिश्चतिलैराज्यैश्चहोमयेत् ॥ एवंसमाप्यहोमंतुआचार्यपूजयेत्ततः ॥ ३३ ॥
ब्राह्मणान्भोजयेत्पश्चाच्छतंशक्त्यौदशाथवा ॥ एवंव्रतेकृतेवत्सफलंयत्स्याच्छृणुष्वतत् ॥ ३४ ॥ बहुजंतुफलोवृक्षोय
थायंसाधकस्तथा ॥ भवेदनेकसुतवान्वंशवृद्धिस्तथाभवेत् ॥ ३५ ॥ हेमपुष्पैर्यथावृक्षस्तथालक्ष्मीप्रदोभवेत् ॥ अद्या
वधिनकस्यापिव्रतमेतत्प्रकाशितम् ॥ ३६ ॥ गोप्याद्गोप्यतरंचैवतवाग्रेकथितंमया ॥ नैवात्रसंशयःकार्योभक्त्याचैत
द्व्रतंचरेत् ॥ ३७ ॥ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येप्रतिपद्गोटकव्रताद्वितीयोदुंबर
व्रतकथनंनामैकादशोध्यायः ॥ ११ ॥ ॥ छ ॥ ॥ छ ॥
॥ ईश्वरउवाच ॥ ॥ अतःपरंप्रवक्ष्यामिस्वर्णगौरीव्रतंशुभम् ॥ श्रावणेशुक्लपक्षेतुतृतीयायांविधातृज ॥ १ ॥ प्रातःस्ना
त्वानित्यकर्मकृत्वासंकल्पमाचरेत् ॥ पार्वतीशंकरौपूज्यौषोडशैरुपचारकैः ॥ २ ॥ देवदेवसमागच्छप्रार्थयेहंजगत्पते
॥ इमांमयाकृतांपूजांगृहाणसुरसत्तम ॥ ३ ॥ वायनानिप्रदेयानिदंपतीभ्यस्तुषोडश ॥ भवान्याश्चमहादेव्याव्रतसं

पूर्णहेतवे ॥ ४ ॥ प्रीतयेद्विजवर्यायवायनंप्रददाम्यहम् ॥ धानाषोडशपक्वान्नैर्वेणुपात्राणिषोडश ॥ ५ ॥ कुर्याद्वस्त्रादि
भिर्युक्तान्याहूयद्विजदंपतीन् ॥ व्रतसंपूर्णतार्थंतुब्राह्मणेभ्योददाम्यहम् ॥ ६ ॥ स्वलंकृताःसुवासिन्यःपातिव्रत्येनभूषि
ताः ॥ ममकार्यसमृद्ध्यर्थंप्रतिगृह्णंतुशोभनाः ॥ ७ ॥ एवंषोडशवर्षाणिअष्टौचत्वारिवापुनः ॥ एकवर्षंतुसद्योवाकृत्वा
चोद्यापनंचरेत् ॥ ८ ॥ पूजांतेचकथांश्रुत्वावाचकंसंप्रपूजयेत् ॥ ९ ॥ सनत्कुमारउवाच ॥ ॥ केनचीर्णंव्रतमिदंमा
हात्म्यंचास्यकीदृशम् ॥ उद्यापनंकथंकार्यंतत्सर्वंवदमेप्रभो ॥ १० ॥ ईश्वरउवाच ॥ ॥ साधुपृष्टंमहाभागकथयामि
तवाग्रतः ॥ स्वर्णगौरीव्रतंनामसर्वसंपत्करंनृणाम् ॥ ११ ॥ पुरासरस्वतीतीरेसुविलाख्यामहापुरी ॥ तत्रचंद्रप्रभोना
मराजासीद्धनदोपमः ॥ १२ ॥ तस्यास्तांरूपलावण्येसौंदर्येस्मरविभ्रमे ॥ महादेवीविशालाख्येद्विभार्येकमलेक्षणे ॥
॥ १३ ॥ तयोःप्रियतराज्येष्ठातस्यासीन्नृपतेर्मता ॥ सकदाचिद्वनंभेजेमृगयासक्तमानसः ॥ १४ ॥ सिंहशार्दूलवाराह
वनमाहिषकुंजरान् ॥ हत्वाबभ्रामतृष्णार्तःसराजाविपिनंमहत् ॥ १५ ॥ चक्रकारंडवाकीर्णंचंचरीकपिलाकुलम् ॥
उत्फुल्लमल्लिकाजातिकुमुदोत्पलमंडितम् ॥ १६ ॥ अपूर्वमवनीशोसौददर्शाप्सरसांसरः ॥ समासाद्यसरस्तीरंपीत्वा
जलमनुत्तमम् ॥ १७ ॥ भक्त्यागौरीमर्चयंतंददर्शाप्सरसांगणम् ॥ किमेतदितिपप्रच्छराजाराजीवलोचनः ॥ १८ ॥

स्वर्णगौरीव्रतमिदंक्रियतेऽस्माभिरुत्तमम् ॥ सर्वसंपत्करंनृणांतत्कुरुष्वनृपोत्तम ॥ १९ ॥ राजोवाच ॥ ॥ विधानंकी
दृशंब्रूतकिंफलंविस्तरान्मम ॥ ताऊचुर्योषितःसर्वास्तृतीयायांनभोयुजि ॥ २० ॥ कर्तव्यंव्रतमेतद्धिस्वर्णगौरीतिसंज्ञि
तम् ॥ पार्वतीशंकरौपूज्यौभक्त्यापरमयामुदा ॥ २१ ॥ दोरकंषोडशगुणंबध्नीयाद्दक्षिणेकरे ॥ नरोवामेतुनारीणांगले
वाबंधनंमतम् ॥ २२ ॥ तत्कृत्वासोपिजग्राहव्रतंनियममानसः ॥ गुणैःषोडशभिर्युक्तंदोरकंदक्षिणेकरे ॥ २३ ॥ बध्ना
मिदेवदेवेशिप्रसादंकुरुमेवरम् ॥ एवंदेव्याव्रतंकृत्वाआजगामनिजंगृहम् ॥ २४ ॥ पप्रच्छदोरकंहस्तेदृष्ट्वाज्येष्ठातिको
पना ॥ त्रोटयित्वाचचिक्षेपबाह्येशुष्कतरूपरि ॥ २५ ॥ नकर्तव्यंनकर्तव्यमितिराज्ञिवदत्यपि ॥ तेनसंस्पृष्टमात्रे
णतरुःपल्लवितोभवत् ॥ २६ ॥ तद्द्वितीयाततोदृष्ट्वाविस्मयाकुलिताभवत् ॥ तत्रस्थंदोरकंच्छिन्नंगृहीत्वासाबबंधह ॥
॥ २७ ॥ ततस्तन्मासमाहात्म्यात्पत्युःप्रियतराभवेत् ॥ ज्येष्ठाव्रतापचारेणसात्यक्तादुःखितावनम् ॥ २८ ॥ प्रय
यौसामहादेवींध्यायंतीमनसाचह ॥ मुनीनामाश्रमेपुण्येनिवसंतीक्वचित्क्वचित् ॥ २९ ॥ निवारितामुनिवरैर्ग
च्छपापेयथासुखम् ॥ धावंतीविपिनंघोरंनिर्विण्णानिषसादह ॥ ३० ॥ ततस्तत्कृपयादेवीप्रादुरासीत्तदग्रतः ॥ तांदृष्ट्वा
दंडवद्भूमौनत्वास्तुत्वानृपप्रिया ॥ ३१ ॥ जयदेविनमस्तुभ्यंजयभक्तवरप्रदे ॥ जयशंकरवामांगेजयमंगलमंगले ॥ ३२ ॥

ततोभक्त्यावरंलब्ध्वागौरीमभ्यर्च्यर्यद्व्रतम् ॥ चक्रेतस्यप्रभावेणभर्तातांचानयद्गृहम् ॥ ३३ ॥ ततोदेव्याःप्रसादे
नसर्वान्कामानवापसा ॥ ततस्ताभ्यांनृपोराज्यंचक्रेसर्वसमृद्धिमान् ॥ ३४ ॥ अंतेशिवपदंप्राप्यकांताभ्यांसहितोनृ
प ॥ ३५ ॥ यःशोभनंव्रतमिदंकुरुतेशिवायाःकुर्यान्ममप्रियतरोभविताचगौर्याः ॥ प्राप्यश्रियंसमधिकांभुविशत्रुसं
घंनिर्जित्यनिर्मलपदंसशिवस्ययाति ॥ ३६ ॥ एतस्योद्यापनविधिंसावधानमनाःशृणु ॥ शुभेतिथौशुभेवारेचंद्रेतारा
बलान्विते ॥ ३७ ॥ मंडपेष्टदलेपद्मेकुंभंधान्योपरिन्यसेत् ॥ पूर्णपात्रंताम्रमयंपलषोडशनिर्मितम् ॥ ३८ ॥ ति
लपूर्णंतत्रदेवीशंकरप्रतिमेन्यसेत् ॥ श्वेतवस्त्रयुगच्छन्नंश्वेतयज्ञोपवीतिनम् ॥ ३९ ॥ वेदोक्तेनप्रतिष्ठाचकर्तव्यातु
यथाविधि ॥ सम्यक्पूजांतुसंपाद्यरात्रौजागरणंचरेत् ॥ ४० ॥ प्रातःपूजांततःकृत्वाततोहोमंसमाचरेत् ॥ ग्रहहोमं
पुराकृत्वाप्रधानंजुहुयात्ततः ॥ ४१ ॥ तिलाश्चयवसंमिश्राआज्येनचपरिप्लुताः ॥ द्रव्यप्रधानेसंख्यातुसहस्रमथवा
शतम् ॥ ४२ ॥ आचार्यंपूजयेत्पश्चाद्वस्त्रालंकारधेनुभिः ॥ वायनानिचदेयानिब्राह्मणांश्चैवभोजयेत् ॥ ४३ ॥ दं
पतीन्भोजयेच्चैवसंख्ययाषोडशैवतु ॥ भूयसींदक्षिणांदद्यात्स्वस्यवित्तानुसारतः ॥ बंधुभिःसहभुंजीतहर्षोत्सवसम
न्वितः ॥ ४४ ॥ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येतृतीयायांस्वर्णगौरीव्रतकथनं
नामद्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

श्रा०मा० ॥ सनत्कुमारउवाच ॥ ॥ केनव्रतेनभगवन्सौभाग्यमतुलंभवेत् ॥ पुत्रपौत्रधनैश्वर्यंमनुजःसुखमेधते ॥ १ ॥ तन्मे अ०
॥२३॥ वदमहादेवव्रतानामुत्तमंव्रतम् ॥ ॥ ईश्वरउवाच ॥ ॥ अस्तिदूर्वागणपतेर्व्रतंत्रैलोक्यविश्रुतम् ॥ २ ॥ भगवत्या १३
पुराचीर्णंपार्वत्याश्रद्धयासह ॥ सरस्वत्यामहेंद्रेणविष्णुनाधनदेनच ॥ ३ ॥ अन्यैश्चदेवैर्मुनिभिर्गंधर्वैःकिंनरैस्तथा ॥
चीर्णमेतद्व्रतंसर्वैःपुराभून्मुनिसत्तम ॥ ४ ॥ चतुर्थींयाभवेच्छुद्धानभोमासिसुपुण्यदा ॥ तस्यांव्रतमिदंकुर्यात्सर्वपापौ
घनाशनम् ॥ ५ ॥ गजाननंचतुर्थ्यांतुएकदंतविपाटितम् ॥ विधायहेम्नाविघ्नेशंहेमपीठासनेस्थितम् ॥ ६ ॥तदा
हेममयीदूर्वातदाधारेव्यवस्थितम् ॥ संस्थाप्यविघ्नहर्तारंकलशेताम्रभाजने ॥ ७ ॥ वेष्टितेरक्तवस्त्रेणसर्वतोभद्रमंड
ले ॥ पूजयेद्रक्तकुसुमैःपत्रिकाभिश्चपंचभिः ॥ ८ ॥ अपामार्गंशमीदूर्वातुलसीबिल्वपत्रकैः ॥ अन्यैःसुगंधैःकुसुमै
र्यथालब्धैःसुगंधिभिः ॥ ९ ॥ फलैश्चमोदकैःपश्चादुपहारंप्रकल्पयेत् ॥ यथावदुपचारैश्चपूजयेद्गिरिजासुतम् ॥ १० ॥
प्रतिमायांस्वर्णमय्यांनिर्मितायांयथाविधि ॥ आवाहयामिविघ्नेशमागच्छतुकृपानिधिः ॥ ११ ॥ रत्नबद्धमिदंहैमं
सिंहासनमनुत्तमम् ॥ आसनार्थमिदंदत्तंप्रतिगृह्णातुविश्वराट् ॥ १२ ॥ उमासुतनमस्तुभ्यंविश्वव्यापिन्सनातन ॥ ॥२३॥
विघ्नौघंछिंधिसकलंममपाद्यंददामिते ॥ १३ ॥ गणेश्वरायदेवायउमापुत्रायवेधसे ॥ अर्घ्यमेतत्प्रयच्छामिगृहाण

भगवन्मम ॥ १४ ॥ विनायकायशूरायवरदायनमोनमः ॥ इदमाचमनीयंतेददामिप्रतिगृह्यताम् ॥ १५ ॥ गंगा
दिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतम् ॥ स्नानार्थंतेमयादत्तंगृहाणसुरपुंगव ॥ १६ ॥ सिंदूरेणयथालक्ष्मकुंकुमैरंजितं
मया ॥ वस्त्रयुग्ममिदंदत्तंगृहाणचनमोस्तुते ॥ १७ ॥ लंबोदरायदेवायसर्वविघ्नापहारिणे ॥ उमांगमलसंभूतचंद
नंप्रतिगृह्यताम् ॥ १८ ॥ अक्षताश्चसुरश्रेष्ठरक्तचंदनचर्चिताः ॥ मयानिवेदिताभक्त्यागृहाणसुरसत्तम ॥ १९ ॥
चंपकैःकेतकीपत्रैर्जपाकुसुमसंघकैः ॥ गौरीपुत्रंपूजयामिप्रसीदतुममोपरि ॥ २० ॥ अनुग्रहायलोकानांदानवा
नांवधायच ॥ अवतीर्णःस्कंदगुरुर्धूपंगृह्णातुवैमुदा ॥ २१ ॥ परंज्योतिःप्रकाशायसर्वसिद्धिप्रदायच ॥ दीपंतुभ्यंप्र
दास्यामिमहादेवात्मनेनमः ॥ २२ ॥ गणानांत्वेतिनैवेद्यमर्पयेन्मोदकादिकम् ॥ अन्नंचतुर्विधंचैवपायसंलड्डुकादि
कम् ॥ २३ ॥ कर्पूरैलादिसंयुक्तंनागवल्लीदलान्वितम् ॥ तांबूलंतेप्रदास्यामिमुखवासार्थमादरात् ॥ २४ ॥ हिर
ण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ दक्षिणांतेप्रदास्यामिह्यतःशांतिंप्रयच्छमे ॥ २५ ॥ गणेश्वरगणाध्यक्षगौरीपुत्र
गजानन ॥ व्रतंसंपूर्णतांयातुत्वत्प्रसादादिभानन ॥ २६ ॥ एवंसंपूज्यविघ्नेशंयथाविभवविस्तरैः ॥ सोपस्करंगणा
ध्यक्षमाचार्यायनिवेदयेत् ॥ २७ ॥ गृहाणभगवन्ब्रह्मन्गणराजंसदक्षिणम् ॥ एतत्त्वद्वचनादद्यपूर्णतांयातुमेव्रतम् ॥

॥ २८ ॥ एवंयःपंचवर्षाणिकृत्वोद्यापनमाचरेत् ॥ इप्सितांल्लभतेकामान्देहांतेशांकरंपदम् ॥ २९ ॥ यद्वावर्षत्रयं
कुर्यात्सर्वसिद्धिमवाप्नुयात् ॥ उद्यापनंविनायस्तुकरोतिव्रतमुत्तमम् ॥ ३० ॥ सर्वंनिष्फलतांयातियथाविध्यपिय
त्कृतम् ॥ उद्यापनदिनेप्रातस्तिलैःस्नानंसमाचरेत् ॥ ३१ ॥ हेम्नःपलात्तदर्धार्धात्कृत्वागणपतिंबुधः ॥ पंचगव्यै
स्तुसंस्नाप्यदूर्वाभिस्तुप्रपूजयेत् ॥ ३२ ॥ मंत्रैस्तुदशभिर्भक्त्याश्रद्धयासहितोनरः ॥ गणाधीशनमस्तुभ्यमुमापुत्रा
घनाशन ॥ ३३ ॥ विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक ॥ एकदंतेभवक्रेतितथामूषकवाहन ॥ ३४ ॥ कुमारगुरवे
तुभ्यमितिनामपदैःपृथक् ॥ पूर्वेद्युरधिवास्यैवप्रातर्होमंसमाचरेत् ॥ ३५ ॥ दूर्वाभिर्मोदकैश्चैवग्रहहोमपुरःसरम् ॥
पूर्णाहुतिंततोहुत्वाआचार्यादीन्प्रपूजयेत् ॥ ३६ ॥ गांसवत्सांघटोध्नींचदद्याद्वित्तानुसारतः ॥ एवंकृतेव्रतेवत्ससर्वा
न्कामानवाप्नुयात् ॥ ३७ ॥ मदीयप्रियपुत्रस्यव्रतेनाहंचतोषितः ॥ भुविदत्त्वासर्वभोगंददाम्यन्तेचसद्गतिम् ॥ ३८ ॥
यथाशाखाप्रशाखाभिर्दूर्वावृद्धिगताभवेत् ॥ तथैवपुत्रपौत्रादिसंततिर्वृद्धिगामिनी ॥ ३९ ॥ इत्येतत्कथितंगुह्यंदूर्वा
गणपतिव्रतम् ॥ श्रेष्ठाच्छ्रेष्ठतरंचैवकर्तव्यंसुखमीप्सुभिः ॥ ४० ॥ ॥ इतिश्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्व
रसनत्कुमारसंवादेदूर्वागणपतिव्रतकथनंनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ छ ॥

॥ ईश्वरउवाच ॥ अतःपरंप्रवक्ष्यामिश्रावणेशुक्लपक्षके ॥ पंचम्यांयच्चकर्तव्यंतच्छृणुष्वमहामुने ॥ १ ॥ चतुर्थ्यामे
कभुक्तंतुनक्तंस्यात्पंचमीदिने ॥ कृत्वास्वर्णमयंनागमथवारौप्यसंभवम् ॥ २ ॥ कृत्वादारुमयंवापिअथवामृन्मयंशुभ
म् ॥ पंचम्यामर्चयेद्भक्त्यानागंपंचफणान्वितम् ॥ ३ ॥ द्वारस्योभयतोलेख्यागोमयेनविषोल्बणाः ॥ पूजयेद्विधिवच्चै
वदधिदूर्वांकुरैःशुभैः ॥ ४ ॥ करवीरैर्मालतीभिर्जातिपुष्पैश्चचंपकैः ॥ तथागंधैरक्षतैश्चधूपैर्दीपैर्मनोहरैः ॥ ५ ॥ ब्राह्म
णान्भोजयेत्पश्चाद्घृतमोदकपायसैः ॥ अनंतंवासुकिंशेषंपद्मनाभंचकंबलम् ॥६॥ तथाकर्कोटकंनामनागमश्वंतथा
ष्टमम् ॥ धृतराष्ट्रंशंखपालंकालीयंतक्षकंतथा ॥ ७ ॥ हरिद्रयाचंदनेनकुड्येनागकुलाधिपान् ॥ नवकद्रूंश्चसंलिख्यपू
जयेत्कुसुमादिभिः ॥ ८ ॥ वल्मीकेपूजयेन्नागान्दुग्धंचैवतुपाययेत् ॥ घृतयुक्तंशर्कराढ्यंयथेष्टंचार्पयेद्बुधः ॥ ९ ॥ लो
हपात्रेपोलिकादिनकुर्यात्तद्दिनेनरः ॥ गोधूमपायसंकुर्यान्नैवेद्यार्थंतुभक्तितः ॥ १० ॥ भर्जिताश्चणकाश्चैवव्रीहयोयाव
नालिकाः ॥ अर्पणीयाश्चसर्पेभ्यःस्वयंचैवतुभक्षयेत् ॥ ११ ॥ बालकेभ्योऽर्पणीयाश्चद्दढादंताभवंतिहि॥वल्मीकस्यस
मीपेतुगायनंवाद्यमेवच ॥ १२ ॥ स्त्रीभिःकार्यंभूषिताभिःकार्यश्चैवोत्सवोमहान् ॥ एवंकृतेकदाचिच्चसर्पतोनभयंभवे
त् ॥ १३ ॥ अन्यच्चशृणुयाद्विप्रलोकानांहितकाम्यया ॥ कथयिष्यामिकिंचित्तेतच्छृणुष्वमहामुने ॥ १४ ॥ नागदष्टो

नरोवत्सप्राप्यमृत्युंव्रजत्यधः ॥ अधोगत्वाभवेत्सर्पस्तामसोनात्रसंशयः ॥ १५ ॥ पूर्वोक्तविधिनासर्वमेकमुक्तादिकार
येत् ॥ नागनिर्माणपूजादिविप्रैःसहतथादरात् ॥ १६ ॥ एवंद्वादशमासेषुमासिमासिव्रतंचरेत् ॥ पंचम्यांशुक्लपक्षस्य
पूर्णेसंवत्सरेपुनः ॥ १७ ॥ ब्राह्मणांश्चयतींश्चैवनागानुद्दिश्यभोजयेत् ॥ इतिहासविदेनागंकांचनंरत्नचित्रितम् ॥
॥ १८ ॥ गांचदद्यात्सवत्सांवैसर्वोपस्करसंयुताम् ॥ दानकालेपठेद्योहिस्मरन्नारायणंविभुम् ॥ १९ ॥ सर्वगंसर्वदा
तारमनंतमपराजितम् ॥ येकेचिन्मेकुलेसर्पदष्टाःप्राप्ताह्यधोगतिम् ॥ २० ॥ व्रतदानेनगोविंदमुक्तिभाजोभवंतुते ॥
इत्युच्चार्याक्षतैर्युक्तंसितचंदनमिश्रितम् ॥ २१ ॥ वासुदेवाग्रतोभक्त्यातोयेतोयंविनिक्षिपेत् ॥ अनेनविधिनासर्वेयेम
रिष्यंतिवामृताः ॥ २२ ॥ सर्पतस्तेऽभियास्यंतिस्वर्गतिंमुनिसत्तम ॥ एवंसर्वान्समुद्धृत्यकुलजान्कुलनंदन ॥ २३ ॥
प्रयातिशिवसान्निध्यंसेव्यमानोऽप्सरोगणैः ॥ वित्तशाठ्यविहीनोयःसर्वमेतत्फलंलभेत् ॥ २४ ॥ नक्तेनभक्तिसहिताः
सितपंचमीषुयेपूजयंतिसुभगान्कुसुमोपहारैः ॥ तेषांगृहेष्वभयदाहिभवंतिसर्पाहर्षान्वितामणिमयूखविभासितांगाः
॥ २५ ॥ प्रतिग्रहंयेचकुर्युर्गृहदानस्यवाडवाः ॥ प्रयांतिसर्पतांतेपिघोरांभुक्त्वातुयातनाम् ॥ २६ ॥ अंतकालेचयेके
चिन्नागहत्यावशादिह ॥ मृतापत्याअपुत्रावाभवंतिमुनिसत्तम ॥ २७ ॥ कार्पण्यवशतःस्त्रीणांसर्पतांयांतिकेचन ॥

निक्षेपानृतवादाच्चकेचित्सर्पाभवंतिहि ॥ २८ ॥ अन्यैश्चापिनिमित्तैर्यैसर्पतांयांतिमानवाः ॥ उपायोयंविनिर्दिष्टःसर्वे
षांनिष्कृतौपरः ॥ २९ ॥ वित्तशाठ्यविहीनेनकृताचेन्नागपंचमी ॥ तद्धितार्थंहरिंशेषःसर्वनागाधिपोविभुम् ॥ ३० ॥ ब
द्धांजलिःप्रार्थयतेवासुकिश्चसदाशिवम् ॥ शेषवासुकिविज्ञप्त्याशिवविष्णूप्रसादितौ ॥ ३१ ॥ मनोरथांस्तस्यसर्वान्कु
रुतःपरमेश्वरौ ॥ नागलोकेतुतान्भोगान्भुक्त्वातुविविधान्बहून् ॥ ३२ ॥ ततोवैकुंठमासाद्यकैलासंवापिशोभनम् ॥
शिवविष्णुगणोभूत्वालभतेपरमंसुखम् ॥ ३३ ॥ एतत्तेकथितंवत्सनागानांपंचमीव्रतम् ॥ अतःपरंकिमन्यत्त्वंश्रोतु
मिच्छसितद्वद ॥ ३४ ॥ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येनागपंचमीव्रतकथनं
नामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ सनत्कुमारउवाच ॥ ॥ श्रुतमाश्चर्यजनकंनागानांपंचमीव्रतम् ॥ षष्ठ्यांकथयदेवेशकिंव्रतंकीदृशोविधिः ॥ १ ॥
॥ ईश्वरउवाच ॥ ॥ शुक्लपक्षेश्रावणेतुषष्ठ्यांकार्यंव्रतंशुभम् ॥ सूपौदनाख्यंविप्रेंद्रमहामृत्युविनाशनम् ॥ २ ॥ शि
वालयेगृहेवापिशिवंसंपूज्ययत्नतः ॥ सूपौदनस्यनैवेद्यमर्पयेद्विधिसंयुतः ॥ ३ ॥ आम्रस्यलवणंशाकंसाधनेपरिकल्प
येत् ॥ नैवेद्यस्यपदार्थैस्तुवायनंब्राह्मणस्यच ॥ ४ ॥ यएतद्विधिनाकुर्यात्तस्यपुण्यमनंतकम् ॥ अत्रैवोदाहरंतीममि

तिहासंपुरातनम् ॥ ५ ॥ राजासीद्रोहितोनामबहुकालमपुत्रवान् ॥ पुत्रार्थीसतपश्चक्रेमहत्परमदारुणम् ॥ ६ ॥ प्रार
ब्धेनास्तितेपुत्रोबोधितोपिसवेधसा ॥ निर्बंधान्ननिवृत्तोभूत्तपसःसोऽतिलालसः ॥ ७ ॥ ततःसंकटमापन्नोवेधाःप्रादुरभू
त्पुनः ॥ पुत्रोदत्तस्तवमयाअल्पायुःसभविष्यति ॥ ८ ॥ पत्नीराजामंत्रयेतांवंध्यात्वंतुगमिष्यति ॥ अपुत्रत्वापवाद
श्चअलमित्येवजायताम् ॥ ९ ॥ ततोब्रह्मवरात्पुत्रोहर्षशोकपरोभवत् ॥ जातकर्मादिसंस्कारांश्चक्रेराजायथाविधि ॥
॥ १० ॥ राज्ञीसादक्षिणानामराजाचैवसरोहितः ॥ शिवदत्तइतिप्रेम्णाचक्रतुर्नामतस्यतौ ॥ ११ ॥ उपनीतश्चतन
योराज्ञातुभयचेतसा ॥ विवाहंनचकारास्यभूमिपालोमृतेर्भयात् ॥ १२ ॥ तदाषोडशवर्षेऽसौमरणंप्रापपुत्रकः ॥ चिंता
मापपरांराजाब्रह्मचारिमृतिंस्मरन् ॥ १३ ॥ येषांकुलेब्रह्मचारीनिधनंप्राप्नुयाद्यदि ॥ तत्कुलंक्षयमायातिसोपिदुर्गति
मापतेत् ॥ १४ ॥ ॥ सनत्कुमारउवाच ॥ देवदेवजगन्नाथपरिहारोस्तिवानवा ॥ अस्तिचेच्चवदस्वाद्यदोषशांतिर्यदाभवेत्
॥ १५ ॥ ईश्वरउवाच ॥ ॥ स्नातकोब्रह्मचारीचनिधनंप्राप्नुयाद्यदि ॥ सयोज्यश्चार्कविधिनासंयोज्यौतौपरस्परम् ॥ १६ ॥
देशकालौतुसंकीर्त्याऽमुकगोत्रादिनामतः ॥ व्रतंवैसर्गिकंकुर्वेमृतस्यब्रह्मचारिणः ॥ १७ ॥ हेम्नाभ्युदयिकंकृत्वाप्रतिष्ठाप्य
चपावकम् ॥ आघारांतंचसंपाद्यचतुर्व्याहृतिभिर्हुनेत् ॥ १८ ॥ व्रतपत्यग्नयेचैवव्रतानुष्ठानसत्फलम् ॥ संपादनायविश्वे

भ्योदेवेभ्यश्चहुनेतद्घृतम्॥ १९॥ततःस्विष्टकृतेहुत्वाहोमशेषंसमापयेत्॥देशकालौपुनःस्मृत्वाकरिष्येऽर्कविवाहकम्
॥२०॥हेम्नाभ्युदयिकंकृत्वाअर्कशाखांशवंतथा॥लिप्तातैलहरिद्राभ्यांपीतसूत्रेणवेष्टयेत्॥ २१ ॥ पीतवस्त्रयुगेनापिअ
ग्निंसंस्थापयेत्ततः॥आघारांतेग्नयेचैवविवाहविधियोजकम्॥२२॥बृहस्पतयेकामायचतुर्थ्याहुतिभिस्तथा॥आज्यंस्वि
ष्टकृतं हुत्वाकर्मचैवंसमापयेत्॥२३॥अर्कशाखांशवंचैवदाहयेच्चयथाविधि ॥ मृतस्यम्रियमाणस्यषडब्दंव्रतमाचरेत्
॥२४॥त्रिंशद्वयोब्रह्मचारिभ्योदद्यात्कौपीनकान्नवान्॥हस्तमात्राःकर्णमात्राद्द्यात्कृष्णाजिनानिच॥२५॥पादुकाछत्र
माल्यानिगोपीचंदनमेवच ॥ मणिप्रवाहमाल्यंचभूषणानिसमर्पयेत् ॥ २६ ॥ एवंकृतेविधानेनविघ्नःकोपिनजायते॥
॥ ईश्वरउवाच ॥ ॥ एवंश्रुत्वाब्राह्मणेभ्योराजाहृदिव्यचारयत् ॥२७॥ भातिमेऽर्कविवाहोयमनुकल्पोनमुख्यकः ॥
नददातिप्रमीतस्यकन्यांकश्चिद्वधूंयतः ॥ २८॥ अहंराजास्मिप्रददेरत्नानिचधनंबहु ॥ ददामितस्मैयःकश्चिद्दास्य
तेऽस्यवधूंयदि ॥ २९ ॥ विप्रःकश्चित्पुरेतस्मिन्नासीद्देशांतरंगतः ॥ तस्यपूर्वमृतायास्तुभार्यायाःकन्यकाशुभा ॥
॥ ३० ॥ आसीद्द्वितीयाभार्यातुदुष्टचित्ताविचारयत्॥सपत्नीद्वेषतश्चापिबहुद्रव्यस्यलोभतः ॥३१ ॥ दशवर्षातुसा
बालादीनामातृवशंगता ॥ सापत्नमातासालक्षंगृहीत्वाप्रददौसुताम् ॥ ३२ ॥ कन्यांगृहीत्वाजग्मुस्तेश्मशानंसरि

तस्तटे ॥ विवाहंचक्रतुश्चैवशवेनसहकन्यकाम् ॥ ३३ ॥ भोजयित्वाविधानेनदग्धुंसमुपचक्रमुः ॥ ततःसाकन्य
कापृच्छत्किमिदंक्रियतेजनाः ॥३४॥ततस्तेदुःखिताःप्रोचुर्दह्यतेयंपतिस्तव॥ ततः प्रोवाचसाभीतारुदतीबालभाव
तः ॥ ३५ ॥ पतिःकिंदह्यतेमेसौदग्धुंनैवददाम्यहम् ॥ गच्छध्वंसहिताःसर्वैतिष्ठाम्यत्राहमेकिका ॥ ३६ ॥ पत्या
सहगमिष्यामिउत्तिष्ठतियदाह्यसौ ॥ दृष्ट्वातस्यास्तुनिर्बंधंकरुणादीनचेतसः ॥ ३७ ॥ प्रारब्धवादिनोवृद्धाःकेचित्त
त्रैवमूचिरे ॥ अहोकिंवाभाविकर्मज्ञायतेनैवकस्यचित् ॥ ३८ ॥ दीनपालःकृपालुश्चभगवान्किंकरिष्यति ॥ निरा
श्रिताचकन्येयंमातुःसापत्नभावतः॥३९॥विक्रीतास्यादतोदेवःकदाचित्पालकोभवेत् ॥ अतोऽस्माभिरशक्येयंदग्धुं
चायंतथाशवः॥४०॥अतोऽस्माभिश्चगंतव्यंसर्वेषांरोचतेयदि॥सम्मन्त्र्यैवंतुसर्वेपिगतास्तेनगरंप्रति ॥ ४१ ॥सैकाशिवं
पार्वतींचस्मरंतीभयविह्वला॥अजानंतीबालभावात्किमेतदितिविह्वला॥४२॥तस्याःसंस्मरणाद्दैन्यात्सर्वज्ञौपार्वतीशि
वौ ॥ करुणापूर्णहृदयौतत्राजग्मतुरंजसा ॥ ४३ ॥ वृषारूढौतुतौदृष्ट्वादंपतीतेजसांनिधी ॥ ननामदंडवद्भूमौनजा
नंत्यपिदैवते ॥ ४४ ॥ आश्वासनंपरंलेभआगतासंगतिस्त्विति ॥ उवाचचपतिःकिंमेजागृतोनैवजायते ॥ ४५ ॥ ॥२७॥
प्रसन्नौबालभावेनदययाचपरिप्लुतौ ॥ ऊचतुस्तेजनन्यास्तुव्रतंसूपौदनाभिधम् ॥ ४६ ॥ व्रतंसंकल्प्यसतिलंगृही

त्वास्यप्रयच्छमे॥ब्रूहियन्मज्जनन्यास्तिव्रतंसूपौदनाभिधम् ॥ ४७ ॥ कृतंतस्यप्रभावेणउत्तिष्ठतुपतिर्मम ॥ तया
कृतंतथासर्वैशिवदत्तस्तथोत्थितः ॥ ४८ ॥ उपदिश्यव्रतंतस्यास्तदांतर्दधतुःशिवौ ॥ शिवदत्तस्तुपप्रच्छकात्वंक्के
हागतोस्म्यहम् ॥ ४९ ॥ साचाहकिंचिद्वृत्तांतंरात्रिश्चापिगताभवत् ॥ प्रातर्नदीतीरगताजनाराज्ञेन्यवेदयन् ॥५०॥
राजन्पुत्रःस्नुषाचैवनदीतीरेवतिष्ठतः ॥ प्रामाणिकेभ्यःश्रुत्वासौहर्षंलोकोत्तरंययौ ॥ ५१ ॥ हर्षभेरींवादयन्सनदी
तीरेसमाययौ ॥ जनाश्चमुदिताःसर्वेप्रशशंसुर्जनाधिपम् ॥ ५२ ॥ राजन्गतःकालगृहंपुत्रस्तेपुनरागतः ॥ प्रशशं
सस्नुषांराजाकिमहंशस्यतेजनैः ॥ ५३ ॥ दूरदृष्टोऽधमश्चाहंधन्येयंसुभगास्नुषा ॥ एतत्पुण्यप्रभावेणपुत्रोयंजीवि
तोमम ॥ ५४ ॥ एवंस्नुषांसुसंभाव्यराजाब्राह्मणसत्तमान् ॥ पूजयामासविभवैर्दानमानपुरःसरम् ॥ ५५ ॥ बहिर्नी
तप्रमीतस्यपुनर्ग्रामप्रवेशने ॥ विधिंब्राह्मणसंदिष्टंशांतिकंविधिनाऽऽचरत् ॥५६॥एतत्तेकथितंवत्सव्रतंसूपौदनाभि
धम् ॥ पंचवर्षाणिकृत्वैतत्पश्चादुद्यापनंचरेत् ॥५७ ॥ प्रतिमांपार्वतीशस्यअर्चयेत्प्रतिवासरे ॥ प्रातर्होमंप्रकुर्वी
तचरुणाम्रदलैस्तथा॥५८॥नैवेद्यंवायनंचैवव्रतोक्तविधिनाचरेत्॥पुत्रंचिरायुषंलब्ध्वाअंतेशिवपुरंव्रजेत् ॥५९॥ ॥
॥इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येसूपौदनषष्ठीकथनंनामपंचदशोऽध्याय॥ १५॥

॥ईश्वरउवाच॥ ॥अतःपरंप्रवक्ष्यामिशीतलासप्तमीव्रतम्॥श्रावणेशुक्लपक्षेतुसप्तम्यामाचरेद्व्रतम्॥१ ॥कुड्येलिखि
त्वावापींतुतथासलिलदेवताः॥सप्तसंख्यादिव्यरूपाअशरीरिणसंज्ञकाः॥२॥बालद्वययुतानारीपुरुषत्रयसंज्ञिता ॥अ
श्वश्ववृषभश्चैवशिबिकानरवाहना॥३॥पूजावार्देवतानांस्यात्षोडशैरुपचारकैः॥ दध्योदनस्यनैवेद्यंसाधनेककर्कटीफल
म्॥४॥द्विजायवायनंदद्यान्नैवेद्यस्यपदार्थकैः॥सप्तवर्षाणिकृत्वैवंसुवासिन्यश्चसप्तवै॥५॥प्रत्यब्दंभोजनीयाःस्युःपश्चादु
द्यापनं चरेत्॥वार्देवतानांप्रतिमाएकस्मिन्स्वर्णपात्रके॥६॥बालेनसहिताःपूज्याःसायंपूर्वेह्निभक्तितः ॥ प्रातर्होमंचच
रुणाग्रहहोमपुरःसरम् ॥ ७ ॥ व्रतमेतत्पुराचीर्णंफलितंचतथाशृणु ॥ सौराष्ट्रदेशेनगरमासीच्छोभनसंज्ञितम् ॥८॥
तत्रासीद्धनिकःकश्चित्सर्वधर्मपरायणः ॥ सवापीःखानयामासनिर्जलेनिजनेवने ॥ ९ ॥ पादमार्गांशुभांरम्यांबहुद्र
व्यव्ययेनसः ॥ पशूनांजलपानायअपियोग्यांदृढास्मभिः॥१०॥बद्धांचिरस्थायिनींचबहिःप्रांतेद्रुमैर्युतम् ॥ आरा
मंकारयामासश्रांतपांथसुखायच ॥ ११ ॥ परंशुष्कंजलंतत्रनलब्धंबिंदुमात्रकम् ॥ प्रयासोमेवृथाजातोद्रव्यंचव्य
यितंवृथा ॥ १२ ॥ इतिचिंतापरश्चासीद्धनिकोधनदाभिधः ॥ रात्रौतत्रैवसुष्वापस्वप्नेतंजलदेवताः ॥ १३ ॥ आग
त्यकथयामासुःशृणूपायंजलागमे ॥ दास्यसेयदितेपौत्रंबलिमस्माकमादृतः ॥ १४ ॥ तदेववापिकेयंतेजलपूर्णाभ

विष्यति ॥ दृष्ट्वैवंगृहमागत्यपुत्रायाकथयद्धनी ॥१५॥द्रविणोनामतत्पुत्रःसोपिधर्मपरायणः॥ शृणुष्वममवत्सस्यभवा
न्मज्जनकोयतः ॥ १६ ॥ तत्राप्येतद्धर्मकार्यंकिंविचार्यमिहत्वया ॥ स्थावरश्चास्तिधर्मोयंनश्वरंचसुतादिकम् ॥१७॥
अल्पमौल्यंमहावस्तुलाभोयंदुर्लभःक्रयः ॥ शीतांशुश्चैवचंडांशुर्वर्तेतेतनयौमम ॥ १८ ॥ शीतांशुर्नामज्येष्ठोयंबलि
ष्ठोयोविचारतः ॥ मंत्रोयंसर्वथास्त्रीभिर्ज्ञातव्योनैवभोःपितः ॥ १९ ॥ उपायस्तत्रमत्पत्नीगर्भिणीवर्ततेऽधुना ॥ आस
न्नप्रसवाचैवमंत्र्यसौस्वपितुर्गृहे ॥ २० ॥ प्रसूत्यर्थंकनिष्ठोसौतयासहगमिष्यति ॥ तदाकार्यमिदंतातनिर्विघ्नेनभविष्य
ति ॥ २१॥ इतिश्रुत्वापुत्रवाक्यंपितातंसतुतोषह ॥ धन्योसिपुत्रधन्योहंत्वयापुत्रेणपुत्रवान् ॥ २२ ॥ एतस्मिन्नंतरेत
स्याःसुशीलायाःपितुर्गृहात् ॥ आकारणंसमगमत्तदासाचजगामह ॥२३॥ ज्येष्ठोस्माकंसमीपेऽस्तुकनिष्ठोनीयतांत्व
या ॥ सातथैवसतीचक्रेभर्तृश्वशुरवाक्यतः ॥ २४ ॥ तदातौपुत्रपितरौतैलेनाभ्यज्यबालकम् ॥ स्नापयित्वासुवस्त्रैश्च
भूषणैःसमलंकृतम् ॥ २५ ॥ पूर्वाषाढावारुणर्क्षेस्थापयामासतुर्मुदा ॥ वाप्यावादेवतास्तुष्टाभवंत्विितिसमूचतुः ॥२६॥
तदैववापीपूर्णाभूत्सुधातुल्येनवारिणा ॥ उभौगृहंजग्मतुस्तौहर्षशोकसमन्वितौ ॥ २७ ॥ सासुशीलापितुर्गेहेसूतपुत्रं
तृतीयकम् ॥ मासत्रयोत्तरंगेहंनिजंगंतुंचनिर्गता ॥ २८॥ वापीसमीपंप्राप्तासौवापींपूर्णांददर्शह ॥ विस्मयंपरमंप्राप

 तत्रस्नानंचकारह ॥ २९ ॥ श्वशुरस्यप्रयासोमेसार्थकश्च्वधनव्ययः ॥ तद्दिनेसप्तमीचासीच्छ्रावणेशुक्लपक्षके ॥ ३० ॥ 
 सुशीलायाव्रतंचासीच्छीतलासंज्ञितंशुभम् ॥ सातत्रपाकमकरोदोदनंचानयद्दधि ॥ ३१ ॥ वार्देवताश्चसंपूज्यदध्य 
न्नंकर्कटीफलम् ॥ नैवेद्यंकल्पयामासदत्त्वाविप्रायवायनम् ॥ ३२ ॥ स्वयंतदेवबुभुजेसहितासहवासिभिः ॥ ततोयो
जनमात्रंतुतस्याग्रामोबभूवह ॥ ३३ ॥ ततःसानिर्गताचासीदारुह्यशिविकांशुभाम् ॥ बालकद्वयसंयुक्तातदाताजल
देवताः ॥ ३४ ॥ ऊचुःपरस्परंचास्याःपुत्रोदेयोयतोऽनया ॥ अस्माकंव्रतमाचीर्णप्रज्ञाचविहितापरा ॥ ३५ ॥ एतद्व्र
तप्रभावेणनूतंनोदीयतेसुतः ॥ पूर्वजातोयदिग्राह्योह्यस्मत्तोषस्यकिंफलम् ॥ ३६ ॥ विसर्जयामासुरितिउक्त्वान्योन्यं
दयालवः ॥ मातरंदर्शयामासुर्वाप्यानिष्कास्यबाह्यतः ॥ ३७ ॥ अधावत्पृष्ठतोमातुर्मातरित्याह्वयन्शिशुः ॥ संश्रुत्यपु
त्रशब्दंसापरावृत्यावलोकयत् ॥ ३८ ॥ दृष्ट्वासानंदनंस्वीयंचकितासाभवद्धृदि ॥ स्थाप्यांकेमूर्ध्न्यवघ्रायकिंचित्पप्र
च्छनोसुतम् ॥ ३९ ॥ बिभेष्यतीतिबुद्ध्यासाहृदयेत्वन्वचिंतयत् ॥ तस्करैर्यदिवानीतस्तर्ह्यलंकारवान्कथम् ॥ ४० ॥
पिशाचैर्यदिवानीतोमोक्षितश्चपुनःकथम् ॥ चिंतासमुद्रेमग्नाःस्युर्गृहसंबंधिनोजनाः ॥ ४१ ॥ इत्येवंचिंतयंतीसानगर 
द्वारमापसा ॥ जनाःसंकथयामासुःसुशीलासुसमागता ॥ ४२ ॥ श्रुत्वातुपितृपुत्रौतौपरांचिंतामवापतुः ॥ किंवदिष्यति

चास्माकमस्माभिर्वाकिमुच्यताम् ॥ ४३ ॥ एतस्मिन्नंतरेप्राप्तापुत्रत्रयसमन्विता ॥ ज्येष्ठंदृष्ट्वातुतंबालंश्वशुरश्वपति
श्वसः ॥ ४४ ॥ आश्चर्यंपरमंप्रापपरांमुदमवापच ॥ त्वयाकिंपुण्यमाचीर्णंव्रतंवापिशुचिस्मिते ॥ ४५ ॥ पतिव्रतासि
धन्यासिपुण्यवत्यसिभामिनि ॥ मासद्वयंतुसंजातमकस्मान्नास्त्यभूच्छिशुः ॥ ४६ ॥ सचत्वयापुनर्लब्धोवापीपूर्णापि
चाभवत् ॥ एकपुत्रागतातस्त्वमागतासित्रयान्विता ॥ ४७ ॥ त्वयोद्धृतंकुलंसुभ्रुकिंत्वांस्तौमिशुभानने ॥ श्वशुरेणस्तु
तैवंसापत्याप्रेम्णाचवीक्षिता ॥ ४८ ॥ श्वश्र्वाचानंदितोवाचपुण्यमार्गस्यसर्वशः ॥ प्रापुःसर्वेपिचानंदंभुक्त्वाभोगान्य
थेप्सितान् ॥ ४९ ॥ इत्येतत्कथितंवत्सशीतलासप्तमीव्रतम् ॥ दध्योदनंशीतलंचशीतलंकर्कटीफलम् ॥ ५० ॥
वापीजलंशीतलंतुशीतलाश्चापिदेवताः ॥ तापत्रयस्यसंतापाच्छीतलाव्रतिनस्ततः ॥ ५१ ॥ अतोहेतोःसप्तमीयं
शीतलेतियथार्थिका॥५२॥ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येशीतलासप्तमीव्रतक
थनंनामषोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ ईश्वरउवाच ॥ ॥ अथवक्ष्यामिदेवेशपवित्रारोपणंशुभम् ॥ सप्तम्यामधिवास्याथअष्टम्यामर्पयेत्तुतत् ॥ १ ॥ पवि
त्रंकारयेद्यस्तुतस्यपुण्यफलंशृणु ॥ सर्वयज्ञव्रतंदानंसर्वतीर्थाभिषेचनम् ॥ २ ॥ प्राप्नुयान्नात्रसंदेहोयस्मात्सर्वगताशि

वा ॥ नाधनोचनदुःखानिनपीडाव्याधयोपिच ॥ ३ ॥ नभयंशत्रुजंतस्यनग्रहैःपीड्यतेक्वचित् ॥ सिध्यंतिसर्वकार्या
णिअल्पानिचमहांतिच ॥ ४ ॥ नातःपरतरंवत्सअन्यत्पुण्यविवृद्धये ॥ नराणांचनृपाणांचस्त्रीणांचैवविशेषतः ॥
॥ ५ ॥ सौभाग्यजननंतातव्रतमेतन्मयोदितम् ॥ श्रावणेशुक्लसप्तम्यामधिवास्यविधानतः ॥ ६ ॥ सर्वोपस्करसंयु
क्तोदेव्यांसद्भक्तिमांश्चसः ॥ सर्वाणिपूजाद्रव्याणिगंधपुष्पफलानिच ॥ ७ ॥ नैवेद्यान्विविधांश्चैववस्त्राद्याभरणानिच ॥
संपाद्यशोधयेदेतान्प्राशयेत्पंचगव्यकम् ॥ ८ ॥ चरुणादिग्बलिंदद्यात्कार्यंचैवाधिवासनम् ॥ छादयेत्सदृशैर्वस्त्रैःपत्रैश्चै
तत्पवित्रकम् ॥ ९ ॥ देव्यास्तन्मूलमंत्रेणशतवाराभिमंत्रितम् ॥ स्थापयेत्पुरतोदेव्याःसर्वशोभासमन्वितम् ॥ १० ॥ दे
व्यास्तुमंडपंकृत्वारात्रौजागरणंचरेत् ॥ नटनर्तकवेश्यानांकुशलान्विविधान्गणान् ॥ ११ ॥ स्थापयेद्वाद्यगीतादीन्नृत्यवि
द्याविशारदान् ॥ प्रत्यूषेविधिवत्स्नात्वादिग्भ्योदद्यात्पुनर्बलीन् ॥ १२ ॥ देवींसंपूज्यविधिवत्स्त्रियोभोज्यास्तथाद्विजाः ॥
पवित्रमर्पयेद्देव्याआदावंतेचदक्षिणाम् ॥ १३ ॥ यथाशक्त्याभवेद्वत्सनियमःकार्यसाधकः ॥ स्त्रियोक्षामृगयापानंराज्ञाव
र्ज्यंप्रयत्नतः ॥ १४ ॥ स्वाध्यायश्चद्विजाचार्यैर्नकार्यंकर्षणंकृषेः ॥ वणिग्भिर्नचवाणिज्यंसप्तपंचदिनानिवा ॥ १५ ॥ अथवात्री
णिचैकंवादिनंतस्यार्धमेववा ॥ देव्याव्यापारआसक्तिःकर्तव्यासततंहृदि ॥ १६ ॥ नकरोतिविधानेनपवित्रारोपणंबुधः ॥

तस्यसांवत्सरीपूजानिष्फलामुनिसत्तम ॥ १७॥ तस्माद्भक्तिसमायुक्तैर्नरैर्देवीपरायणैः ॥ वर्षेवर्षेप्रकर्तव्यंपवित्रा
रोपणंशुभम् ॥ १८ ॥ कर्काटकगतेसूर्येतथासिंहगतेपिवा ॥ अष्टम्यांशुक्लपक्षस्यदद्याद्देव्याःपवित्रकम् ॥ १९ ॥
एतस्याकरणेदोषोनित्यमेतत्प्रकीर्तितम् ॥ २० ॥ सनत्कुमारउवाच ॥ ॥ देवदेवमहादेवपवित्रंयत्त्वयोदितम् ॥
निर्मितव्यंकथंस्वामिंस्तद्विधिंवदसर्वशः ॥ २१ ॥ ईश्वरउवाच ॥ ॥ हेमताम्रक्षौमरूप्यैःसूत्रैःकौशेयपट्टजैः ॥ कुशैः
काशैश्चकार्पासैर्ब्राह्मण्याकर्तितैःशुभैः ॥ २२ ॥ कृत्वात्रिगुणितंसूत्रंत्रिगुणीकृत्यसाधयेत् ॥ ततोत्तमंपवित्रंतुषष्ट्यास
हशतैस्त्रिभिः ॥ २३ ॥ सप्तत्यासहितंद्वाभ्यांशताभ्यांमध्यमंस्मृतम् ॥ साशीतिनाशतेनैवकनिष्ठंतत्समाचरेत् ॥
॥ २४ ॥ उत्तमंतुशतग्रंथिपंचाशद्ग्रंथिमध्यमम् ॥पवित्रकंकनिष्ठंस्यात्षट्त्रिंशद्ग्रंथिशोभनम् ॥२५॥अथवांगगु
णैर्वेदैर्द्वाभ्यांद्वादशतोपिवा ॥ चतुर्विंशद्द्वादशाष्टग्रंथिभिर्वापवित्रकम् ॥ २६ ॥ अथचाष्टोत्तरशतंचतुःपंचाशदेववा॥
सप्तविंशतिरेवैवंज्येष्ठमध्यकनीयसम् ॥ २७ ॥ अधमंनाभिमात्रंस्यादूरुमात्रंतुमध्यमम्॥ उत्तमंजानुमात्रंतत्प्रति
मायानिगद्यते ॥ २८ ॥ रंज्याःसर्वाःकुंकुमेनपवित्रग्रंथयःशुभाः ॥ देवींपूज्यपुरोभागेसर्वतोमंडलेशुभे ॥ २९ ॥
कलशेवेणुपटलेपवित्राणिनिधापयेत् ॥ त्रिसूत्र्यांब्रह्मविष्ण्वीशानावाह्यचततःशृणु ॥ ३० ॥ नवसूत्र्यांतथोंकारंसो

मंवह्निंविधिंतथा ॥ नागांश्चंद्ररवीशांश्चविश्वेदेवांश्चस्थापयेत् ॥ ३१ ॥ अतःपरंप्रवक्ष्यामिस्थाप्याग्रंथिषुदेवताः ॥
क्रियाचपौरुषीवीराविजयाचापराजिता ॥ ३२ ॥ मनोन्मनीजयाभद्रामुक्तिरीशातथैवच ॥ प्रणवादिनमोंतैश्चना
मभिर्ग्रंथिसंख्यया ॥ ३३ ॥ आवर्त्यमानैरावाह्यपूजयेच्चंदनादिभिः ॥ धूपितंप्रणवेनाभिमंत्र्यदेव्यैसमर्पयेत् ॥३४॥
एतत्तेकथितंदेव्याःपवित्रारोपणंशुभम् ॥ अन्येषांचैवदेवानांप्रतिपत्प्रभृतिष्वपि ॥ ३५ ॥ पवित्रारोपणंकार्यंदेवता
स्तावदामिते ॥ धनदःश्रीस्तथागौरीगणेशःसोमराड्गुरुः ॥ ३६ ॥ भास्करश्चंडिकांबाचवासुकिश्चतथर्षयः ॥ चक्र
पाणिर्ह्यनंतश्चशिवःकःपितरस्तथा ॥ ३७ ॥ प्रतिपत्प्रभृतिष्वेताःपूज्यास्तिथिषुदेवताः ॥ मुख्यायादेवतायास्तुप
वित्रारोपणंत्विदम् ॥ ३८ ॥ तदंगदेवतायास्तुत्रिसूत्रंस्यात्पवित्रकम् ॥ ३९ ॥ ईश्वरउवाच ॥ ॥ अतःपरंप्रवक्ष्या
मिकर्तव्यंनवमीदिने ॥ श्रावणेमासिविप्रेंद्रपक्षयोरुभयोरपि ॥ ४० ॥ कुमारीनामिकादुर्गापूजनीयायथाविधि ॥ कु
र्यान्नक्तव्रतंतत्रक्षीरमाक्षकेभोजनम् ॥ ४१ ॥ उपवासपरोवास्यान्नवम्यांपक्षयोर्द्वयोः ॥ कुमारीवेतिनाम्नावैचंडिका
मर्चयेत्सदा ॥ ४२ ॥ कृत्वारौप्यमयींभक्त्यादुर्गांवैपापनाशिनीम् ॥ करवीरस्यपुष्पैस्तुगंधैरगरुचंदनैः ॥ ४३ ॥धूपे
नचदशांगेनमोदकैश्चापिपूजयेत् ॥ कुमारींभोजयेत्पश्चात्स्त्रियोविप्रांश्चभक्तितः ॥ ४४ ॥ भुंजीतवाग्यतःपश्चाद्वि

ल्वपत्रकृताशनः ॥ एवंयःपूजयेद्दुर्गांश्रद्धयापरयायुतः ॥ ४५ ॥ सयातिपरमंस्थानंयत्रदेवोगुरुःस्थितः ॥ एतत्तेन
वमीकृत्यंकथितंविधिनंदन ॥ ४६ ॥ सर्वपापप्रशमनंसर्वसंपत्करंनृणाम् ॥ पुत्रपौत्रादिजननमंतेसद्गतिदायक
म् ॥ ४७ ॥ ॥ इतिश्रीस्कंदपुराणेसनत्कुमारेश्वरसंवादेश्रावणमासमाहात्म्येष्टम्यांदेवीपवित्रारोपणंनामसप्त
दशोध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ सनत्कुमारउवाच ॥ भगवन्पार्वतीनाथभक्तानुग्रहकारक ॥ कथयस्वदयासिंधोमाहात्म्यंदशमीतिथेः ॥ १ ॥ ईश्व
रउ० ॥ श्रावणेशुक्लपक्षेतुदशम्यांप्रारभेद्व्रतम्॥प्रतिमासेदशम्यांतुशुक्लायांव्रतमाचरेत् ॥२ ॥ एवंद्वादशमासेषुकृत्वा
व्रतमनुत्तमम् ॥ नभःशुक्लदशम्यांतुततउद्यापनंचरेत् ॥ ३ ॥ राज्याशयाराजपुत्रःकृष्यर्थंचकृषीवलः ॥ वाणिज्या
र्थंवणिक्पुत्रःपुत्रार्थंगुर्विणीतथा ॥ ४ ॥ धर्मार्थकामसिद्ध्यर्थंलोकःकन्यावरार्थिनी ॥ यष्टुकामोद्विजवरोरोग्यारोग्यार्थ
मेवच ॥ ५ ॥ चिरप्रवसितेकांतेपत्नीतस्यागमायच ॥ एतेष्वन्येषुकर्तव्यमाशाव्रतमिदंतदा ॥ ६ ॥ यस्माद्य
स्यभवेदार्तिःकार्यंतेनतदाव्रतम् ॥ नभःशुक्लदशम्यांतुस्नात्वासंपूज्यदेवताम् ॥ ७ ॥ नक्तमाशास्तुपूज्यावैपुष्पपल्लवचं
दनैः ॥ गृहांगणेलेखयित्वायवपिष्टातकेनवा ॥ ८ ॥ स्त्रीरूपाश्चाधिदेवस्यशस्त्रवाहनचिह्निताः ॥ दत्वाघृताक्तंनैवे

द्यंपृथग्दीपांश्चदापयेत् ॥ ९ ॥ फलानिकालजातानिततःकार्यंनिवेदयेत् ॥ आशाःस्वाशाःसदासंतुसिद्ध्यंतुमेम
नोरथाः ॥ १० ॥ भवतीनांप्रसादेनसदाकल्याणमस्त्विति ॥ एवंसंपूज्यविधिवद्दत्त्वाविप्रायदक्षिणाम् ॥ ११ ॥
अनेनक्रमयोगेनमासिमासिसदाचरेत् ॥ वर्षमेकंमुनिश्रेष्ठततउद्यापनंचरेत् ॥ १२ ॥ सौवर्णीःकारयेदाशारौप्याः
पिष्टातकेनवा ॥ ज्ञातिबंधुजनैःसार्धंस्नातःसम्यगलंकृतः ॥ १३ ॥ पूजयेद्भक्तियुक्तेनचेतसादशदेवताः ॥ स्थाप
येत्क्रमयोगेनमंत्रैरेभिर्गृहांगणे ॥ १४ ॥ त्वयिसन्निहितःशक्रःसुरासुरनमस्कृतः ॥ स्वामीचभुवनस्यास्यऐंद्रीदिग्देव
तेनमः ॥ १५ ॥ अग्नेःपरिग्रहादाशेत्वमाग्नेयीतिपठ्यते ॥ तेजोरूपापराशक्तिरतस्त्वंवरदाभव ॥ १६ ॥ धर्मराजः
समाश्रित्यलोकान्सयमयत्यसौ ॥ तेनसंयमिनीचासियाम्येसत्कामदाभव ॥ १७ ॥ खड्गहस्तातिविक्रांतानिर्ऋति
स्थानमाश्रिता ॥ तेननिर्ऋतिरूपासित्वमाशांपूरयस्वमे ॥ १८ ॥ त्वय्यास्तेभुवनाधारोवरुणोयादसांपतिः ॥ कार्या
र्थंममधर्मार्थंवारुणिप्रवणाभव ॥ १९ ॥ अधिष्ठितासियस्मात्त्वंवायुनाजगदादिना ॥ वायव्येत्वमतःशांतिंनित्यंय
च्छममालये ॥ २० ॥ धनाधिपाधितिष्ठासिप्रख्यातात्वमिहोत्तरा ॥ निरुत्तराभवास्मासुदत्त्वासद्योमनोरथम् ॥
॥ २१ ॥ ऐशानिजगदीशेनशंभुनात्वमलंकृता ॥ पूरयस्वशुभेदेविवांछितानिनमोनमः ॥ २२ ॥ सर्वलोकोपरिगता

सर्वदात्वंशिवप्रदा ॥ सनकाद्यैःपरिवृतामांत्राहित्राहिसर्वदा ॥ २३ ॥ नक्षत्राणिचसर्वाणिग्रहास्तारागणास्तथा ॥ न
क्षत्रमातरोयाश्चभूतप्रेतविनायकाः ॥ २४ ॥ पूजितास्तुमयाभक्त्याभक्तिप्रणवचेतसा ॥ सर्वैममेष्टसिद्ध्यर्थंभवंतुप्रण
वाःसदा ॥ २५ ॥ भुजंगनकुलेनत्वंसेवितासियतोह्यधः ॥ नागांगनाभिःसहितातुष्टाभवममाद्यवै ॥ २६ ॥ एभिर्मंत्रैः
समभ्यर्च्यपुष्पधूपादिनाततः ॥ अलंकारांश्चवासांसिफलानिचनिवेदयेत् ॥ २७ ॥ ततोवाद्यादिनादेनगीतनृत्यादि
मंगलैः ॥ नृत्यतीभिर्वरस्त्रीभिर्जागरेणनिशांनयेत् ॥ २८ ॥ कुंकुमाक्षततांबूलदानमानादिभिःसुखम् ॥ अतिवाह्य
चतांरात्रिंहर्षयुक्तेनचेतसा ॥ २९ ॥ प्रभातेप्रतिमाअर्च्यब्राह्मणायनिवेदयेत् ॥ अनेनविधिनाकृत्वाक्षमाप्यप्रणिपत्य
च ॥ ३० ॥ भुंजीतमित्रैःसहितःसुहृद्बंधुजनेनच ॥ एवंयःकुरुतेतातदशमीव्रतमादरात् ॥ ३१ ॥ सर्वान्कामानवाप्नो
तिमनसोभिमतान्नरः ॥ स्त्रीभिर्विशेषतःकार्यंव्रतमेतत्सनातनम् ॥ ३२ ॥ प्राणिवर्गैयतोनार्यःश्रद्धाकामपरायणाः ॥
धन्यंयशस्यमायुष्यंसर्वकामफलप्रदम् ॥ ३३ ॥ कथितंचमुनिश्रेष्ठमयाव्रतमिदंतव ॥ नानेनसदृशंचान्यद्व्रतमस्ति
जगत्त्रये ॥ ३४ ॥ येमानवाविधिजपुंगवकामकामाःसंपूजयंतिदशमीषुसदादशाशाः ॥ तेषामशेषनिहितान्हृदयेति
कामानाशाःफलंतिकिमिहास्तिबहूदितेन॥३५॥मोक्षप्रदानेनायासोनात्रकार्याविचारणा॥व्रतंचानेनसदृशंनभूतंनभ

विष्यति॥३६॥ ॥इतिश्रीस्कंद०ईश्वरसनत्कुमारसं०श्रावणमा०आशादशमीव्रतकथनंनामाऽष्टादशोऽध्यायः॥१८॥
॥ ईश्वरउवाच ॥ ॥ अथवक्ष्येनभोमासिपक्षयोरुभयोरपि ॥ एकादश्यांतुयत्कृत्यंतच्छृणुष्वमहामुने ॥ १ ॥ नक
स्यचिन्मयाख्यातंगुह्यमेतदनुत्तमम् ॥ महापुण्यप्रदंवत्समहापातकनाशनम् ॥ २ ॥ वांछितार्थप्रदंनृणांश्रुतंपापाप
हारकम् ॥ श्रेष्ठंव्रतानांसर्वेषांशुभमेकादशीव्रतम् ॥ ३ ॥ तत्तेऽहंसंप्रवक्ष्यामिसमाहितमनाःशृणु ॥ दशम्यामुषसिस्नात्वा
त्वाकृतसंध्यादिकःशुचिः ॥ ४ ॥ प्राप्याज्ञांवेदविदुषःपुराणज्ञाञ्जितेंद्रियान् ॥ संपूज्यदेवदेवेशंषोडशैरुपचारकैः ॥
॥ ५ ॥ एकादश्यांनिराहारःस्थित्वाहमपरेहनि ॥ भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत ॥ ६ ॥ कुर्याच्चनियमंवत्स
गुरुदेवाग्निसंनिधौ ॥ तद्दिनेभूमिशायीस्यात्कामक्रोधविवर्जितः ॥ ७ ॥ ततःप्रभातेविमलेकेशवार्पितमानसः ॥ श्रीध
रेतितदावाक्यंक्षुतप्रस्खलनादिषु ॥ ८ ॥ पाखंडादिभिरालापंदर्शनंश्रवणंतथा ॥ त्यजेद्दिनत्रयंवत्सव्रतंकैवल्यकार
कम् ॥ ९ ॥ ततोमध्याह्नसमयेनद्यादौविमलेजले ॥ स्नानंकुर्याज्जितक्रोधःपंचगव्यपुरःसरम् ॥ १० ॥ आदित्यायन
मस्कृत्यश्रीधरंशरणंव्रजेत् ॥ स्ववर्णाचारविधिनाकृतकृत्योगृहंव्रजेत् ॥ ११ ॥ पूजयेच्छ्रीधरंतत्रश्रद्धाभक्तिपुरःसर
म् ॥ पुष्पधूपैस्तथादीपैर्नैवेद्यैर्विविधैरपि ॥ १२ ॥ गीतवाद्यैःकथाभिश्चजागरंकारयेन्निशि ॥ कुंभंसंस्थापयित्वातुरत्न

गर्भसकांचनम् ॥ १३ ॥ छादितंवस्त्रयुग्मेनसितचंदनचर्चितम् ॥ प्रतिमांदेवदेवस्यशंखचक्रगदाभृताम् ॥ १४ ॥
कृत्वायथावत्संपूज्यप्रभातेविमलेसति ॥ द्वादश्यांकृतकृत्यस्तुश्रीधरेतिजपेद्बुधः ॥ १५ ॥ पूजयेद्देवदेवेशंशंखचक्रग
दाधरम् ॥ विप्रायदद्यात्कलशंहेमदक्षिणयान्वितम् ॥ १६ ॥ विशेषान्नवनीतंतुतत्रदेयंद्विजातये ॥ श्रीधरःप्रीयतांमे
द्यश्रियंपुष्णात्वनुत्तमाम् ॥ १७ ॥ इत्युच्चार्यमुनिश्रेष्ठसमभ्यर्च्यजगद्गुरुम् ॥ संभोज्यविप्रमुख्यांश्चदद्याच्छक्त्याचद
क्षिणाम् ॥ १८ ॥ भृत्यादीन्भोजयित्वातुयवसंगोषुदापयेत् ॥ स्वयंभुंजीतचततःसुहृद्बंधुसमन्वितः ॥ १९ ॥ सनत्कु
मारकथितस्तेशुक्लैकादशीविधिः ॥ एवमेवनभोमासिकृष्णायामपिसाधयेत् ॥ २० ॥ अनुष्ठानंतुल्यमेवदेवनाम्निपरं
भिदा ॥ जनार्दनःप्रीयतांमेवाक्यमेतदुदीरयेत् ॥२१॥शुक्लायांश्रीधरोदेवःकृष्णायांतुजनार्दनः॥ एतत्तेसम्यगाख्या
तमुभयैकादशीव्रतम् ॥ २२ ॥ नानेनसदृशंपुण्यंनभूतंनभविष्यति ॥ इदंत्वयागोपनीयंनदेयंदुष्टमानसे ॥ २३ ॥
॥ ईश्वरउवाच ॥ ॥ अथवक्ष्यामिद्वादश्यांपवित्रारोपणंहरेः ॥ उक्तःप्रायोविधिर्देव्याःपवित्रारोपणेतव ॥ २४ ॥ विशे
षोयश्चतंवक्ष्येसावधानमनाःशृणु ॥ अत्राधिकारिसंदिष्टस्तंशृणुष्वमहामुने ॥ २५ ॥ ब्राह्मणःक्षत्रियोवैश्यस्तथास्त्री
शूद्रएवच ॥ स्वधर्मावस्थिताःसर्वेभक्त्याकुर्युःपवित्रकम् ॥ २६ ॥ अतोदेवेतिमंत्रेणद्विजोविष्णोर्निवेदयेत् ॥ स्त्रीशूद्रा

णांनाममंत्रोयेनसंपूजयेद्धरिम् ॥ २७॥ कद्रुद्रायेतिमंत्रेणद्विजःशंभोर्निवेदयेत् ॥ स्त्रीशूद्राणांनाममंत्रोयेनसंपूजयेद्ध
रम् ॥ २८ ॥ कृतेमणिमयंकार्यंत्रेतायांहेमसंभवम् ॥ पट्टजंद्वापरेसूत्रंकार्पासंतुकलौस्मृतम् ॥ २९ ॥ यतिभिर्मानसं
कार्यंपवित्रारोपणंशुभम्॥कृतानिचपवित्राणिवैणवेपट्टलेशुभे॥३०॥संस्थाप्यशुचिवस्त्रेणपिधाय्यपुरतोन्यसेत्॥क्रिया
लोपविघातार्थंयत्त्वयापिहितंप्रभो ॥३१॥ मयैतत्क्रियतेदेवतवतुष्ट्यैपवित्रकम् ॥ नमेविघ्नोभवेद्देवकुरुनाथदयांमयि
॥ ३२ ॥ सर्वथासर्वदादेवममत्वंपरमागतिः ॥ एतत्पवित्रतोहंत्वांतोषयामिजगत्पते ॥३३॥कामक्रोधादयोप्येतेनमे
स्युर्व्रतघातकाः ॥ अद्यप्रभृतिदेवेशयावत्स्याद्वार्षिकंदिनम् ॥३४ ॥ तावद्रक्षात्वयाकार्यात्वद्भक्तस्यनमोस्तुते॥ देवंसं
प्रार्थ्यकलशेपात्रेवेणुमयेशुभे॥ ३५॥संस्थितस्यपवित्रस्यकुर्यात्प्रार्थनमादृतः॥संवत्सरकृतार्चायाःपवित्रीकरणायभोः
॥ ३६ ॥ विष्णुलोकात्पवित्राद्यआगच्छेहनमोस्तुते ॥ विष्णुतेजोद्भवंरम्यंसर्वपापप्रणाशनम् ॥ ३७॥ सर्वकामप्रदंदे
वतवांगेधारयाम्यहम्॥ आमंत्रितोसिदेवेशपुराणपुरुषोत्तम॥ ३८॥अतस्त्वांपूजयिष्यामिसान्निध्यंकुरुतेनमः॥निवेद
याम्यहंतुभ्यंप्रातरेतत्पवित्रकम्॥३९॥ ततःपुष्पांजलिंदत्त्वारात्रौजागरणंचरेत्॥एकादश्यामधिवसेद्द्वादश्यामर्चयेदु
षः॥४०॥गंधदूर्वाक्षतैर्युक्तंसमादायपवित्रकम्॥देवदेवनमस्तुभ्यंगृहाणेदंपवित्रकं॥४१॥पवित्रीकरणार्थायवर्षपूजाफ

लप्रदम् ॥ पवित्रंमांकुरुष्वाद्ययन्मयादुष्कृतंकृतम् ॥ ४२ ॥ शुद्धोभवाम्यहंदेवत्वत्प्रसादात्सुरेश्वर ॥ मूलसंपुटितै
रेतैर्मंत्रैर्दद्यात्पवित्रकम् ॥ ४३ ॥ महानैवेद्यकंदत्त्वानीराज्यप्रार्थयेत्ततः ॥ मूलमंत्रेणजुहुयाद्वह्नौसघृतपायसम् ॥
॥ ४४ ॥ विसर्जयित्वामंत्रेणअनेनैवपवित्रकम् ॥ सांवत्सरींशुभांपूजांसंपाद्यविधिवन्मम ॥ ४५ ॥ व्रजेदानींपवि
त्रत्वंविष्णुलोकंविसर्जितम् ॥ उत्तार्यब्राह्मणेदद्यात्तोयेवाथविसर्जयेत् ॥४६ ॥ एतत्तेकथितंवत्सपवित्रारोपणंहरेः ॥
इहलोकेसुखंभुक्त्वाअंतेवैकुंठमाप्नुयात् ॥ ४७ ॥ इतिश्रीस्कंद० ईश्व० सनत्कुमारसंवादेश्रावणमासमा० उभयैकाद
शीव्रतकथनंनामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ ईश्वरउवाच ॥ त्रयोदशीदिनेकृत्यंकथयामितवाग्रतः ॥ अत्रानंगःपूजनीयःषोडशैरुपचारकैः ॥ १ ॥ अशोकैर्मा
लतीपुष्पैःपद्मैर्देवप्रियैस्तथा ॥ कौसुंभैर्बकुलैःपुष्पैस्तथान्यैरपिमादकैः ॥ २ ॥ रक्ताक्षतैःपीतगंधैर्द्रव्यैःसौगंधिकैःशु
भैः ॥ पुष्टिकाजनकैर्द्रव्यैरेतोवृद्धिकरैःपरैः ॥ ३ ॥ नैवेद्यमर्पयेच्चैवतांबूलंमुखरोचकम् ॥तांबूलेयोजयेद्द्रव्यंचि
क्कणंक्रमुकंशुभम् ॥ ४ ॥ खादिरंचूर्णकंजातित्वचंजातिफलंतथा ॥ लवंगैलानारिकेलबीजस्यशकलंलघु ॥ ५ ॥
स्वर्णरूप्याणिपत्राणिकर्पूरंकेसरंतथा ॥ जातानिमगधेदेशेनागवल्लीदलानिच ॥ ६ ॥ श्वेतवर्णानिपक्वानिजीर्णा

श्रा०मा० निचद्दधानिच ॥ रक्तयुक्तानिदेयानिप्रीतयेशंबरद्विषः ॥ ७ ॥ माक्षीकमलसारेणनिर्मिताभिश्ववर्तिभिः ॥ नीराजये अ०
॥३९॥ त्त्वित्तभवंपुष्पांजलिमथार्पयेत् ॥ ८ ॥ प्रार्थयेन्नामभिस्तस्यतानितेकथयाम्यहम् ॥ सर्वोपमानसौंदर्यःप्रद्युम्नाख्यो २०
हरेःसुतः ॥ ९ ॥ मीनकेतनकंदर्पकानंगोमन्मथस्तथा ॥ मारःकामात्मसंभूतोझषकेतुर्मनोभवः ॥ १० ॥ रतिपी
नघनोत्तुंगस्तनयोःपत्रवल्लिका ॥ यस्यवक्षसिकस्तूर्याःशोभतेपरिरंभणात् ॥ ११ ॥ पुष्पधन्वञ्छंबरारेकुसुमेषोर
तेःपते ॥ मकरध्वजपंचेषोमदनस्मरसुंदर ॥ १२ ॥ देवानांकार्यसिद्ध्यर्थंशिवक्षिप्तहुताशन ॥ परोपकारसीमानं
ध्वनयंस्तेनकर्मणा ॥ १३ ॥ निमित्तमात्रंविजयेवसंतस्यसहायता ॥ त्वन्मनोरंजनेशक्रस्तिष्ठत्येवदिवादिशि ॥
॥ १४ ॥ स्वपदभ्रंशनेयस्मात्तपस्विभ्योबिभेतिसः ॥ त्वदन्यःशंभुनाकोन्योविरुध्येद्दृढमानसः ॥ १५ ॥ परब्रह्मा
नंदसमानंददस्त्वद्दतेऽत्रकः ॥ महामोहस्यसैन्येषुत्वाद्दशःकोस्तिवीर्यवान् ॥ १६ ॥ अनिरुद्धपतिःकृष्णात्मजोय
श्वसुरप्रभुः॥ मलयाचलसंभूतचंदनागरुवासितः॥ १७॥ दक्षिणादिङ्मातरिश्वासहायस्तेजगज्जये ॥ शरत्सुधांशुसन्नि
त्रजगत्सर्जनकारण ॥ १८ ॥ नाथत्वदस्त्रंपरमममोघमतिदूरगम् ॥ मर्मच्छिदामकरुणंरहितंप्रतिकारतः ॥ १९॥ ॥३९॥
सुकुमारंश्रुतमपिनिःसीमक्षोभकारणम् ॥ स्वतुल्यस्यपदार्थस्यदर्शनादपिसाधकम् ॥ २० ॥ प्रवृत्तिमुख्यालंकारः

सहायेनजगज्जये ॥ सर्वैश्रेष्ठास्त्वयादेवाउपहास्याःकृताविभो ॥ २१ ॥ ब्रह्माकन्यालंपटोभूद्वृंदासक्तोहरिःस्मृतः ॥ परदारकलंकेनअस्पृष्टव्यःशिवोयतः ॥ २२ ॥ स्वशक्त्यामेवनिरतोबहुकालंव्यवायवान् ॥ दुष्कर्मनिरतश्चेंद्रोगौतमस्यवधूंप्रति ॥ २३ ॥ द्विजराजोगुरोर्भार्यांबलादेवापहारवान् ॥ विश्वामित्रस्तपोभ्रष्टःकेनाकारिचभूयसः॥ २४॥ उक्ताःप्राधान्यतस्त्वेतेकिंबहूक्तेनमानद ॥ विरलाःसंतिलोकेऽस्मिन्ब्राह्मणावशवर्तिनः ॥ २५ ॥ तस्मात्प्रसीदभगवान्कृतयापूजयाऽनया ॥ पूजितःश्रावणेशुक्लत्रयोदश्यांमनोभवः ॥ २६ ॥ प्रवृत्तिलंपटस्यातिवीर्यंपुष्टिंददात्यलम् ॥ निवृत्तिमार्गनियतःस्वविकारंहरत्यपि ॥ २७ ॥ सकामस्यस्त्रियोरम्याःपीनोत्तुंगपयोधराः ॥ शरत्पूर्णसुधारश्मिवदनाःकमलेक्षणाः ॥ २८ ॥ लंबातिनीलकुरलस्निग्धकेश्यःसुनासिकाः॥ रंभोरूर्वांगुप्तगुल्फागतिनिर्जितकुंजराः ॥ २९ ॥ कामागाराजिताश्वत्थपलाशाअतिशोभनाः ॥ बृहच्छ्रोण्यःकंबुकंठ्योबृहज्जघनशोभिताः ॥ ३० ॥ बिंबोष्ठचःसिंहकंत्यश्चनानालंकारभूषिताः॥ मनोरमाददात्येषसंतुष्टःश्रावणेऽर्चया॥ ३१ ॥ शुक्लपक्षेत्रयोदश्यांददातिचसुतान्बहून् ॥ चिरायुषोगुणाढ्यांश्चसुखरूपान्सुसंततीन् ॥ ३२ ॥ कर्तव्यंयत्त्रयोदश्यामेतत्तेकथितंशुभम् ॥ अतःपरंचतुर्दश्यांकर्तव्यंशृणुमानद ॥ ३३ ॥ अष्टम्यांकथितंदेव्याःपवित्रारोपणंतव ॥ तत्रचेन्नकृतंतर्हिचतुर्द

श्यांतुकारयेत् ॥ ३४ ॥ पवित्रंतुत्रिनेत्रस्यचतुर्दश्यांसमर्पयेत् ॥ पवित्रसाधनंसर्वंदेवीविष्णुपवित्रवत् ॥ ३५ ॥
ऊहःपरंप्रकर्तव्यंःप्रार्थनादिषुनामसु॥शैवागमेमयाप्रोक्तंजाबालादिषुयत्परम्॥३६॥विकल्पात्कश्चिदस्तीहविशेषस्तं
वदामिते ॥ ॥ एकादशाथवासूत्रैस्त्रिंशताचाष्टयुक्तया ॥ ३७ ॥ पंचाशतावाकर्तव्यंतुल्यग्रंथ्यंतरालकम् ॥ द्वाद
शांगुलमानानितथाचाष्टांगुलानिवा॥३८॥लिंगविस्तारमानानिचतुरंगुलिकानिवा॥अर्पयेच्छिवतुष्ट्यर्थंविधिःपूर्वोक्त
एवहि ॥ ३९ ॥ फलादिपूर्वमेवोक्तमंतेकैलासमाप्नुयात् ॥ एतत्तेकथितंवत्सकिमन्यच्छ्रोतुमिच्छसि ॥ ४० ॥
॥ इतिश्रीस्कं०ईश्वरसनत्कुमारसं०श्रावणमासमाहात्म्येत्रयोदशीचतुर्दशीकर्तव्यकथनंनामविंशोऽध्यायः॥ २० ॥
॥ सनत्कुमारउवाच ॥ ॥ पौर्णमास्याविधिंब्रूहिकृपांकृत्वादयानिधे ॥ माहात्म्यंशृण्वतांस्वामिन्श्रवणेच्छाप्रवर्धते॥
॥ १ ॥ ईश्वरउवाच ॥ ॥ उत्सर्जनमुपाकर्मअध्यायानांभवेदिह॥ पौषपूर्णामाघपूर्णाअथवोत्सर्जनेतिथिः ॥ २ ॥
पौषस्यप्रतिपद्वापिमाघमासस्यवाभवेत् ॥ ऋक्षंवारोहिणीसंज्ञमुत्सर्जनकृतौभवेत् ॥ ३ ॥ अथवान्येषुकालेषुस्वस्व
शाखानुसारतः ॥ सहप्रयोगोयुक्तःस्यादुत्सर्गप्रकृतिद्वये ॥ ४ ॥ अतोनभःपौर्णमास्यामुत्सर्जनमिहेष्यते ॥ उपा
कर्मणिचैवंस्याच्छ्रवणर्क्षंतुबह्वृचाम् ॥ ५ ॥ चतुर्दश्यांपौर्णमास्यांप्रतिपद्दिवसेपिवा ॥ यत्रवाश्रवणर्क्षंस्याद्बह्वृचानां

तुतद्दिने ॥ ६ ॥ यजुषांपौर्णमास्यांस्यात्सामगानांतुहस्तभे ॥ शुक्रगुर्वोरस्तमयेउपाकर्मचरेत्सुखम् ॥ ७ ॥ आरंभः
प्रथमोनस्यादितिशास्त्रविदांमतम् ॥ ग्रहसंक्रांतदुष्टेतुकालेकालांतरेभवेत् ॥ ८ ॥ पंचम्यांहस्तयुक्तायांपूणार्यांवान
भस्यके॥स्वस्वगृह्यानुसारेणउत्सर्जनमुपाकृतिः॥९॥मलमासेतुसंप्राप्तेशुद्धमासितुसाभवेत्॥नित्यंकर्मद्वयंचेदंप्रत्यब्दं
नियमाच्चरेत् ॥ १० ॥ उपाकर्मसमाप्तौतुसंस्थितेषुद्विजातिषु ॥ अर्पणीयःसदादीपोयोषिद्भिस्तत्रसंसदि ॥ ११ ॥
आचार्यःप्रतिगृह्णातिदद्याद्वान्यद्द्विजातये ॥ सौवर्णेराजतेवापिपात्रेताम्रमयेपिवा ॥१२॥ प्रस्थमात्रंतुगोधूमादीपंत
त्पिष्टसंभवम् ॥ दीपपात्रंसंविधायज्वालयेत्तत्रदीपकम् ॥ १३ ॥ आज्येनवाथतैलेनवर्तित्रयसमन्वितम् ॥ सदक्षिणं
सतांबूलंब्राह्मणायनिवेदयेत् ॥ १४ ॥ दीपंसंपूज्यविप्रंचमंत्रमेतमुदीरयेत् ॥सदक्षिणःसतांबूलःसभादीपोयमुत्तमः॥
॥ १५ ॥ अर्पितोदेवदेवस्यममसंतुमनोरथाः ॥ सभादीपप्रदानेनपुत्रपौत्रादिकंकुलम् ॥ १६ ॥ सर्वद्युज्ज्वलतांया
तिवर्धतेयशसासह ॥ स्वरंगनाभिःसदृशंरूपंजन्मांतरेलभेत् ॥ १७ ॥ सौभाग्यंचैवलभतेभर्तुःप्रियतराभवेत् ॥ एवंकृ
त्वापंचवर्षंततउद्यापनंचरेत् ॥ १८ ॥ विप्रायदक्षिणांदद्याद्यथाशक्तिचभक्तितः ॥ सभादीपस्यमाहात्म्यमेतत्तेकथितं
शुभम् ॥ १९ ॥ श्रवणाकर्मसंस्थाचतस्यामेवनिशिस्मृता ॥ तदुत्तरंसर्पबलिस्तत्रैवचविधीयते ॥ २० ॥ इदंसंस्थाद्व

श्रा०मा० यंकुर्यात्स्वस्वगृह्यमवेक्ष्यच ॥ हयग्रीवस्यावतारस्तस्यामेवतिथौमतः ॥ २१ ॥ हयग्रीवजयंत्यास्तुअतोत्रैवमहोत्सवः अ०
॥३७॥ ॥ उपासनावतांतस्यनित्यस्तुपरिकीर्तितः ॥ २२ ॥ श्रावण्यांश्रवणेपूर्वंजातोहयशिराहरिः ॥ जगामसामवेदंतुसर्व २१
किल्बिषनाशनम् ॥ २३ ॥ सिंधूनदीवितस्तायांप्रवृत्तस्तत्रसंगमे ॥ श्रवणर्क्षेततस्तत्रस्नानंसर्वार्थसिद्धिदम् ॥ २४ ॥
तत्रसंपूजयेद्विष्णुंशंखचक्रगदाधरम् ॥ श्रोतव्यान्यथसामानिपूज्याविप्राश्चसर्वथा ॥ २५ ॥ क्रीडितव्यंचभोक्तव्यंतत्रै
वस्वजनैःसह ॥ जलक्रीडाचकर्तव्यानारीभिर्भर्तृलब्धये ॥ २६ ॥ स्वस्वदेशेस्वस्वगृहेअपिकुर्यान्महोत्सवम् ॥ पूज
येच्चहयग्रीवंजपेन्मंत्रंचतंशृणु ॥ २७ ॥ प्रणवादिर्नमःशब्दस्ततोभगवतेइति ॥ धर्मायाथचतुर्थ्यंतंयोज्यचात्मविशो
धनम् ॥ २८ ॥ पुनरंतेनमःशब्दोमंत्रश्चाष्टादशाक्षरः ॥ सर्वसिद्धिकरश्चायंषट्प्रयोगैकसाधकः ॥ २९ ॥ पुरश्चरणमे
तस्यअक्षराणांतुसंख्यया ॥ लक्षंवाथसहस्रंवाकलौतुस्याच्चतुर्गुणम् ॥ ३० ॥ एवंकृतेहयग्रीवस्तुष्टःसत्कामदोभवेत्
॥ एतस्यामेवपूर्णायांरक्षाबंधनमिष्यते ॥ ३१ ॥ सर्वरोगोपशमनंसर्वाशुभविनाशनम् ॥ शृणुत्वंमुनिशार्दूलइतिहासं
पुरातनम् ॥ ३२ ॥ इंद्राण्यायत्कृतंपूर्वमिंद्रस्यजयसिद्धये ॥ देवासुरमभूद्युद्धंपुराद्वादशवार्षिकम् ॥ ३३ ॥ शक्रंदृष्ट्वा ॥ ३७ ॥
तदाश्रांतंदेवीप्राहसुरेश्वरम् ॥ अद्यभूतदिनंदेवप्रातःसर्वंभविष्यति ॥ ३४ ॥ अहंरक्षांविधास्यामितेनाजेयोभविष्य

सि ॥ इत्युक्त्वापौर्णमास्यांसापौलोमीकृतमंगला ॥ ३५ ॥ बबंधदक्षिणेपाणौरक्षांमोदप्रदांततः ॥ बद्धरक्षस्ततः
शक्रःकृतस्वस्त्ययनोद्विजैः ॥ ३६ ॥ दुद्रावदानवानीकंक्षणाज्जिग्येप्रतापवान् ॥ वासवोविजयीभूत्वापुनरेवजगत्त्रये
॥ ३७ ॥ एषप्रभावोरक्षायाःकथितस्तेमुनीश्वर ॥ जयदःसुखदश्चैवपुत्रारोग्यधनप्रदः ॥ ३८ ॥ सनत्कुमारउवाच
॥ ॥ क्रियतेकेनविधिनारक्षाबंधःसुरोत्तम॥ कस्यांतिथौकदादेवएतन्मेवक्तुमर्हसि ॥ ३९ ॥ यथायथाहिभगवन्विचि
त्राणिप्रभाषसे ॥ तथातथानमेतृप्तिर्बह्वर्थाःशृण्वतःकथाः ॥ ४० ॥ ईश्वरउवाच ॥ ॥ संप्राप्तेश्रावणेमासिपौर्णमास्यां
दिनोदये ॥ स्नानंकुर्वीतमतिमान्श्रुतिस्मृतिविधानतः ॥ ४१ ॥ संध्याजपादिसंपाद्यपितॄन्देवानृषींस्तथा ॥ तर्पयि
त्वाततःकुर्यात्स्वर्णपात्रविनिर्मिताम् ॥ ४२ ॥ हेमसूत्रैश्चसंबद्धांमौक्तिकादिविभूषिताम् ॥ कौशेयतंतुभिःकीर्णैर्विचित्रै
र्मलवर्जितैः ॥ ४३ ॥ विचित्रग्रंथिसंयुक्तांपदगुच्छैश्चराजिताम् ॥ सिद्धार्थैश्चाक्षतैश्चैवगर्भितांसुमनोहराम् ॥ ४४ ॥
संस्थाप्यकलशंतत्रपूर्णपात्रेतुतांन्यसेत् ॥ उपविश्यासनेरम्येसुहृद्भिःपरिवारितः ॥ ४५ ॥ वेश्यानर्तनगानादिकृत
कौतुकमंगलः ॥ ततःपुरोधसाकार्योरक्षाबंधःसमंत्रकः ॥ ४६ ॥ येनबद्धोबलीराजादानवेंद्रोमहाबलः ॥ तेनत्वामनु
बध्नामिरक्षेमाचलमाचल ॥ ४७॥ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चैवान्यमानवैः ॥ रक्षाबंधःप्रकर्तव्योद्विजान्संपूज्ययत्नतः

॥ ४८ ॥ अनेनविधिनायस्तुरक्षाबंधनमाचरेत् ॥ ससर्वदोषरहितःसुखीसंवत्सरंभवेत् ॥ ४९ ॥ यःश्रावणेविमल
मासिविधानविज्ञोरक्षाविधानमिदमाचरतेमनुष्यः ॥ आस्तेसुखेनपरमेणसवर्षमेकंपुत्रैश्चपौत्रसहितःससुहृज्जनश्च
॥ ५० ॥ भद्रायांचनकर्तव्योरक्षाबंधःशुचिव्रतैः ॥ बद्धारक्षातुभद्रायांविपरीतफलप्रदा ॥ ५१ ॥ ॥ इतिश्रीस्कंदपु
राणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येउपाकर्मोत्सर्जनश्रवणाकर्मसर्पबलिसभादीपहयग्रीवजयंतीरक्षाबंध
विधिकथनंनामैकविंशोऽध्यायः ॥ २१ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥
॥ ईश्वरउवाच ॥ ॥ श्रावणेबहुलेपक्षेचतुर्थ्यांमुनिसत्तम ॥ व्रतंसंकष्टहरणंसर्वकामफलप्रदम् ॥ १ ॥ सनत्कुमार
उवाच ॥ ॥ क्रियतेकेनविधिनाकिंकार्यंकिंचपूजनम् ॥ उद्यापनंकदाकार्यंतन्मेवदसुविस्तरम् ॥ २ ॥ ॥ ईश्वर
उवाच ॥ ॥ चतुर्थ्यांप्रातरुत्थायदंतधावनपूर्वकम् ॥ ग्राह्यंव्रतमिदंपुण्यंसंकष्टहरणंशुभम् ॥ ३ ॥ निराहारोस्मिदेवे
शयावच्चंद्रोदयोभवेत् ॥ भोक्ष्यामिपूजयित्वात्वांसंकष्टात्तारयस्वमाम् ॥ ४ ॥ एवंसंकल्प्यवैधात्रःस्नात्वाकृष्णतिलैः
शुभैः ॥ विधायचाह्निकंसर्वंपश्चात्पूज्योगणाधिपः ॥ ५ ॥ त्रिभिर्माषैस्तदर्धेनतृतीयांशेनवापुनः ॥ यथाशक्त्याथवाहै
मींप्रतिमांकारयेद्बुधः ॥ ६ ॥ हेमाभावेतुरूप्यस्यताम्रस्यापियथासुखम् ॥ सर्वथातुदरिद्रेणकर्तव्यामृन्मयीशुभा ॥ ७ ॥

वित्तशाठ्यंनकर्तव्यंकृतेकार्यंविनश्यति ॥ रम्येऽष्टदलपद्मेतुकुंभंवस्त्रयुतंन्यसेत् ॥ ८ ॥ जलपूर्णंतत्रपूर्णपात्रेदेवंप्र
पूजयेत् ॥ षोडशैरुपचारैस्तुमंत्रैर्वैदिकतांत्रिकैः ॥ ९ ॥ मोदकान्कारयेद्विप्रतिलयुक्तान्दशोत्तमान् ॥ देवाग्रेस्था
पयेत्पंचपंचविप्रायदापयेत् ॥ १० ॥ पूजयित्वातुतंविप्रंभक्तिभावेनदेववत् ॥ दक्षिणांतुयथाशक्त्यादत्त्वाचप्रार्थये
त्ततः ॥ ११ ॥ विप्रवर्यनमस्तुभ्यंमोदकांस्तेददाम्यहम् ॥ सफलान्पंचसंख्याकान्देवदक्षिणयायुतान् ॥ १२ ॥
आपदुद्धरणार्थायगृहाणद्विजसत्तम ॥ अबद्धमतिरिक्तंवाद्रव्यहीनंमयाकृतम् ॥ १३ ॥ तत्सर्वंपूर्णतांयातुविप्ररूप
गणेश्वर ॥ ब्राह्मणान्भोजयेच्चैवस्वाद्वन्नेनयथासुखम् ॥ १४ ॥ चंद्रायार्घ्यंप्रदातव्यंशृणुतन्मंत्रमादितः ॥ क्षीरसाग
रसंभूतसुधारूपनिशाकर ॥ १५ ॥ गृहाणार्घ्यंमयादत्तंगणेशप्रीतिवर्धन ॥ एवंकृतेविधानेनप्रसन्नःस्याद्गणाधिपः ॥
॥ १६ ॥ ददातिवांछितान्कामांस्तस्मात्तद्व्रतमाचरेत् ॥ विद्यार्थीलभतेविद्यांधनार्थीलभतेधनम् ॥ १७ ॥ पुत्रार्थी
पुत्रमाप्नोतिमोक्षार्थीलभतेगतिम् ॥ कार्यार्थीकार्यमाप्नोतिरोगीरोगाद्विमुच्यते ॥ १८ ॥ आपत्सुवर्तमानानांनृणांव्या
कुलचेतसाम् ॥ चिंतयाग्रस्तमनसांवियोगःसुहृदांतथा ॥ १९ ॥ सर्वसंकष्टहरणंसर्वाभीष्टफलप्रदम् ॥ पुत्रपौत्रादिजननं
सर्वसंपत्करंनृणाम् ॥ २० ॥ पूजनेचजपेचैवमंत्रंतेकथयाम्यहम् ॥ तारोत्तरंनमःशब्दंहेरंबंमदमोदितम् ॥ २१ ॥ चतुर्थ्यंतं

प्रशस्तंचसंकष्टस्यनिवारणम्॥स्वाहांतंचवदेन्मंत्रमेकविंशतिवर्णकम् ॥ २२ ॥इंद्रादिलोकपालांश्चसमंतादर्चयेत्सु
धीः॥मोदकानांप्रकारंचअन्यंतेकथयाम्यहम्॥२३॥पक्कमुद्गतिलैर्युक्तामोदकाघृतपाचिताः॥अर्पणीयागणेशायनारि
केलेनगर्भिताः ॥ २४ ॥ ततोदूर्वांकुरान्गृह्णन्नेभिर्नामपदैःपृथक् ॥ पूजयेद्गणनाथंचतानिनामानिमेशृणु ॥ २५ ॥
गणाधिपनमस्तेस्तुउमापुत्राघनाशन ॥ एकदंतेभवक्रेतितथामूषकवाहन ॥ २६ ॥ विनायकेशपुत्रेतिसर्वसिद्धि
प्रदायक ॥ विघ्नराजस्कंदगुरोसर्वसंकष्टनाशन ॥ २७ ॥ लंबोदरगणाध्यक्षगौर्यंगमलसंभव॥ धूम्रकेतोभालचंद्र
सिंदूरासुरमर्दन ॥ २८ ॥ विद्याविधानविकटशूर्पकर्णेतिचैवहि ॥ पूजयेद्गणपंचैवमेकविंशतिनामभिः ॥ २९ ॥
प्रार्थयेच्चततोदेवंभक्तिनम्रःप्रसन्नधीः ॥ विघ्नराजनमस्तेस्तुउमापुत्राघनाशन ॥ ३० ॥ यदुद्दिश्यकृतंमेऽद्ययथाश
क्त्याप्रपूजनम् ॥ तेनतुष्टोममाद्याशुहृत्स्थान्कामान्प्रपूरय ॥ ३१ ॥विघ्नान्नाशयमेसर्वान्विविधोपस्थितान्प्रभो ॥ त्व
त्प्रसादेनकार्याणिसर्वाणीहकरोम्यहम् ॥ ३२ ॥ शत्रूणांबुद्धिनाशंचमित्राणामुदयंकुरु ॥ ततोहोमंप्रकुर्वीतशतमष्टो
त्तरंतथा ॥ ३३ ॥ मोदकैर्वायनंदद्याद्व्रतसंपूर्णहेतवे ॥ लड्डुकैर्मोदकैर्वापिसप्तभिःफलसंयुतम् ॥ ३४ ॥ गणेशप्री
णनार्थायब्राह्मणायददाम्यहम् ॥ कथांश्रुत्वाततःपुण्यांदद्यादर्घ्यंप्रयत्नतः ॥ ३५ ॥ चंद्रायपंचवारंतुमंत्रेणानेनस

त्तम ॥ ३६ ॥ क्षीरोदार्णवसंभूतअत्रिगोत्रसमुद्भव ॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ॥ ३७ ॥ ततःक्ष
मापयेद्देवंशक्त्याविप्रांश्वभोजयेत् ॥ स्वयंभुंजीततच्छेषंयदेवब्राह्मणार्पितम् ॥ ३८ ॥ सप्तग्रासान्मौनयुक्तोह्यशक्त
स्तुयथासुखम् ॥ इत्थंकुर्यात्रिमासेषुचतुर्ष्वपिविधानतः ॥ ३९ ॥ उद्यापनंपंचमेचकुर्याद्धीमान्प्रयत्नतः ॥ सौवर्णं
वक्रतुंडंचशक्त्याकुर्याद्विचक्षणः ॥ ४० ॥ पूर्वोक्तेनविधानेनपूजयेद्भक्तिमान्नरः ॥ चंदनेनसुगंधेनपुष्पैर्नानाविधैः
शुभैः ॥ ४१ ॥ नारिकेलफलेनैवदद्यादर्घ्यंसमाहितः ॥ दद्याद्भक्तायविप्रायवायनंफलसंयुतम् ॥ ४२ ॥ शूर्पपाय
ससंयुक्तंरक्तवस्त्रेणवेष्टितम् ॥ सौवर्णंगणपंतस्मैदद्याच्चैवसदक्षिणम् ॥ ४३ ॥ तिलानामाढकंदद्याद्व्रतसंपूर्णहेतवे॥
ततःक्षमापयेद्देवंविघ्नेशःप्रीयतामिति ॥ ४४ ॥ इत्थमुद्यापनंकृत्वाहयमेधफलंलभेत् ॥ सर्वकार्याणिसिध्यंतिमनोभि
लषितान्यपि ॥ ४५ ॥ पुराकल्पेगतेस्कंदेपार्वत्यावैकृतंकिल ॥ चतुर्ष्वपिचमासेषुममवाक्येनसत्तम ॥ ४६ ॥
पंचमेमासिदृष्टस्तुकार्तिकेयोह्यपर्णया ॥ समुद्रपानवेलायांह्यगस्त्येनपुराकृतम् ॥ ४७ ॥ त्रिषुमासेषुविघ्नेशप्रसादा
त्सिद्धिमापसः ॥ षण्मासावधिविप्रेंद्रदमयंत्याकृतंत्विदम् ॥ ४८ ॥ नलमन्वेषयंत्याचततोदृष्टानलोभवत् ॥
नीतेऽनिरुद्धेबाणस्यनगरंचित्रलेखया ॥ ४९ ॥ क्वगतःकेननीतोसावित्यभूद्व्याकुलःस्मरः ॥प्रद्युम्नंपुत्रशोकार्तंप्रीत्या

रुक्मिण्यभाषत ॥ ५० ॥ शृणुपुत्रप्रवक्ष्यामियद्वृत्तंमामकेगृहे ॥ राक्षसेनपुरानीतेबालकेत्वयिखंडिते ॥ ५१ ॥त्वद्वि
योगजदुःखेनहृदयंममदारितम् ॥ कदाद्रक्ष्याम्यहंपुत्रमुखमत्यंतसुंदरम् ॥ ५२ ॥ अन्यस्त्रीणांसुतान्दृष्ट्वाममचेतो
विदीर्यते ॥ ममपुत्रोभवेन्नासौवयसामेनमानतः ॥ ५३ ॥ इतिचिंताकुलायामेगतान्यब्दानिभूरिशः ॥ ततोमेदैवयो
गेनलोमशोमुनिरागतः ॥ ५४ ॥ तेनोपदिष्टंविधिवत्सर्वचिंताहरंव्रतम् ॥ संकटाख्यचतुर्थ्यास्तुचतुर्वारंमयाकृतम्॥
॥ ५५ ॥ तत्प्रसादात्त्वमायातोहत्वाशंबरमाहवे ॥ ज्ञात्वाप्रकुरुपुत्रत्वंततोज्ञास्यसिनंदनम् ॥ ५६ ॥ प्रद्युम्नेनकृतंवि
घ्नगणनाथस्यतोषणम् ॥ श्रुतोबाणासुरपुरेऽनिरुद्धोनारदात्ततः ॥ ५७ ॥ गत्वाबाणासुरपुरंयुद्धंकृत्वासुदारुणम् ॥ कृ
शानुरेतसासार्धंजित्वाबाणासुरंरणे ॥ ५८ ॥ आनीतःस्नुषयासार्धमनिरुद्धस्तदामुने ॥ अन्यैर्देवासुरैःपूर्वंकृतंविघ्ने
शतुष्टये ॥ ५९ ॥ अनेनसदृशंलोकेसर्वसिद्धिकरंव्रतम् ॥तपोदानंचतीर्थंचविद्यतेनात्रकुत्रचित् ॥ ६० ॥ बहुनात्र
किमुक्तेननास्त्यन्यत्कार्यसिद्धये ॥ नोपदेश्यंत्वभक्तायनास्तिकायशठायच ॥ ६१ ॥ देयंपुत्रायशिष्यायश्रद्धायुक्ता
यसाधवे ॥ ६२ ॥ ममप्रियोसिविप्रर्षेधर्मिष्ठविधिनंदन ॥ कार्यकर्तासिलोकानामुपदिष्टमतस्तव ॥ ६३ ॥ ॥
॥ इतिश्रीस्कं० श्राव० ईश्वरसनत्कुमारसंवादेचतुर्थीव्रतकथनंनामद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ छ ॥ ॥ छ ॥

॥ ईश्वरउवाच ॥ ॥ कृष्णाष्टम्यांनभोमासिवृषेचंद्रेनिशीथके ॥ देवक्यजीजनत्कृष्णंयोगोस्मिन्वसुदेवतः ॥ १ ॥
सिंहराशिगतेसूर्यैंकर्तव्यःसुमहोत्सवः ॥ सप्तम्यांलघुभुक्कुर्याद्दंतधावनपूर्वकम् ॥ २ ॥ उपवासस्यनियमःस्वपेद्रात्रौ
जितेंद्रियः ॥ केवलेनोपवासेनकृष्णजन्मदिनंनयेत् ॥ ३ ॥ सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः ॥ उपावृत्तस्तु
पापेभ्योयस्तुवासोगुणैःसह ॥ ४ ॥ उपवासःसविज्ञेयःसर्वभोगविवर्जितः ॥ ततोष्टम्यांतिलैःस्नात्वानद्यादौविमलेज
ले ॥ ५ ॥ सुदेशेशोभनंकुर्याद्देवक्याःसूतिकागृहम् ॥ नानावर्णैःसुवासोभिःशोभितंकलशैःफलैः ॥ ६ ॥ पुष्पैर्दीपाव
लीभिश्चचंदनागरुधूपितम् ॥ हरिवंशस्यचरितंगोकुलंतत्रलेखयेत् ॥ ७ ॥ युक्तंवादित्रनिनदैर्नृत्यगीतादिमंगलैः ॥
षष्ठ्यादेव्याधिष्ठितांचतन्मध्येप्रतिमांहरेः ॥ ८ ॥ कांचनींराजतींताम्रींपैत्तलींमृन्मयींतुवा ॥ वार्क्षींमणिमयींवापिव
र्णकैर्लिखितायथा ॥ ९ ॥ सर्वलक्षणसंपन्नांपर्यंकेचाष्टशल्यके ॥ प्रसूतादेवकींतत्रस्थापयेन्मंचकोपरि ॥ १० ॥ सुप्तं
बालंतत्रहरिंपर्यंकेस्तनपायिनम् ॥ यशोदांतत्रचैकस्मिन्प्रदेशेसूतिकागृहे ॥ ११ ॥ प्रसूतंकन्यकांचैवकृष्णपार्श्वेतु
संलिखेत् ॥ कृतांजलिपुटान्देवान्यक्षविद्याधरामरान् ॥ १२ ॥ वसुदेवंचतत्रैवखड्गचर्मधरंस्थितम् ॥ काश्यपोवसुदे
वोयमदितिश्चैवदेवकी ॥ १३ ॥ शेषोवलोयशोदापिअदित्यंशाद्बभूवह ॥ नंदःप्रजापतिर्दक्षोगर्गश्चापिचतुर्मुखः ॥

श्री०मा० ॥ १४ ॥ गोप्यश्चाप्सरसः सर्वा गोपाश्चापि दिवौकसः ॥ कालनेमिश्च कंसोयं नियुक्तास्तेन चासुराः ॥ १५ ॥ गाधेनुकुं अ०
॥४१॥ जराश्चाश्च दानवाः शस्त्रपाणयः ॥ लेखनीयाश्च तत्रैव कालियो यमुनाह्रदे ॥ १६ ॥ इत्येवमादि यत्किंचिच्चरितं हरिणा २३
कृतम् ॥ लेखयित्वा प्रयत्नेन पूजयेद्भक्तितत्परः ॥ १७ ॥ उपचारैः षोडशभिर्देवकी चेति मंत्रतः ॥ १८ ॥ गायद्भिः किंन
राद्यैः सततपरिणतां वेणुवीणानिनादैर्भृंगार्यादर्शदूर्वादधिकलशकरैः किन्नरैः सेव्यमानाम् ॥ पर्यंके स्वास्तरस्थामुदित
तरमुखींपुत्रिणीसम्यगास्ते सा देवी दिव्यमाता विजयसुतसुता देवकी कांतयुक्ता ॥ १९॥ प्रणवादि नमोंतैश्च पृथङ्नामा
नुकीर्तनैः ॥ कुर्यात्पूजां विधिज्ञस्तु सर्वपापापनुत्तये ॥ २० ॥ देवक्या वसुदेवस्य वासुदेवस्य चैव हि ॥ बलदेवस्य नंद
स्य यशोदायाः पृथक्पृथक् ॥ २१ ॥ चंद्रोदये शशांकाय अर्घ्यं दद्याद्धरिं स्मरन् ॥ क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव ॥
नमस्ते रोहिणीकांत अर्घ्यं नः प्रतिगृह्यताम् ॥ २२ ॥ देवक्या वसुदेवं च नंदं चैव यशोदया ॥ रोहिण्यां चसुधारश्मिबलं च
च हरिणा सह ॥ २३ ॥ संपूज्य विधिवद्देही किं नाप्नोति सुदुर्लभम् ॥ एकादशीकोटिसंख्या तुल्या कृष्णाष्टमी तथा ॥२४॥
एवं संपूज्य तद्रात्रौ प्रभाते नवमीदिने ॥ यथा हरेस्तथा कार्यो भगवत्या महोत्सवः ॥ २५ ॥ ब्राह्मणान्भोजयेद्भक्त्या दद्याद्वै
गोधनादिकम् ॥ यद्यदिष्टतमं तत्र कृष्णो मे प्रीयतामिति ॥ २६ ॥ नमस्ते वासुदेवाय गोब्राह्मणहिताय च ॥ शांतिरस्तु ॥ ४१ ॥

शिवंचास्तुइत्युक्तातंविसर्जयेत् ॥ २७ ॥ ततोबंधुजनैःसार्धंस्वयंभुंजीतवाग्यतः ॥ एवंयःकुरुतेदेव्याःकृष्णस्यचम
होत्सवम् ॥ २८ ॥ प्रतिवर्षंविधानेनयथोक्तंलभतेफलम् ॥ पुत्रसंतानमारोग्यंसौभाग्यमतुलंभवेत् ॥ २९ ॥ इहधर्म
मतिर्भूत्वाअंतेवैकुंठमाप्नुयात् ॥ उद्यापनमथोवक्ष्येपुण्येह्निविधिपूर्वकम् ॥ ३० ॥ पूर्वेद्युरेकभक्ताशीस्वपेद्विष्णुंस्मरन्हृ
दि ॥ प्रातःसंध्यादिसंपाद्यब्राह्मणैःस्वस्तिवाचयेत् ॥ ३१ ॥ आचार्यंवरयित्वातुऋत्विजश्चैवपूजयेत् ॥ पलेनवातद
र्धेनतदर्धार्धेनवापुनः ॥ ३२ ॥ प्रतिमांकारयेत्पश्चाद्वित्तशाठ्यविवर्जितः ॥ मंडपेमंडलेदेवान्ब्रह्माद्यान्स्थापयेद्बुधः ॥
॥ ३३ ॥ तत्रसंस्थापयेत्कुंभंताम्रंमृन्मयमेववा ॥ तस्योपरिन्यसेत्पात्रंराजतंवैणवंतुवा ॥ ३४ ॥ वाससाच्छाद्यगोविं
दंतत्रसंपूजयेद्बुधः ॥ उपचारैःषोडशभिर्मंत्रैर्वैदिकतांत्रिकैः ॥ ३५ ॥ ततोर्घ्यंहरयेदद्यादेवकीसाहितायच ॥ शंखेकृत्वा
जलंशुद्धंसपुष्पफलचंदनम् ॥ ३६ ॥ जानुभ्यामवनींगत्वानारिकेलफलान्वितम् ॥ जातःकंसवधार्थायभूभारोत्तारणा
यच ॥ ३७ ॥ कौरवाणांविनाशायदैत्यानांनिधनायच ॥ गृहाणार्घ्यंमयादत्तंदेवक्यासहितोहरे ॥ ३८ ॥ चंद्रायार्घ्यं
ततोदद्यात्पूर्वोक्तविधिनासुधीः ॥ ३९ ॥ नमस्तुभ्यंजगन्नाथदेवकीतनयप्रभो ॥ वसुदेवात्मजानंतत्राहिमांभवसागरा
त् ॥ ४० ॥ इत्थंसंप्रार्थ्यदेवेशंरात्रौजागरणंचरेत् ॥ प्रत्यूषेविमलेस्नात्वापूजयित्वाजनार्दनम् ॥ ४१ ॥ पायसेनतिला

श्रा०मा० ज्यैश्वमूलमंत्रेणभक्तितः ॥ अष्टोत्तरशतंहुत्वाततःपुरुषसूक्ततः ॥ ४२ ॥ मंत्रेणेदंविष्णुरितिजुहुयाद्वैघृताहुतीः ॥ हो अ०
॥ ४२ ॥ मशेषंसमाप्याथपूर्णाहुतिपुरःसरम् ॥ ४३ ॥ आचार्यंपूजयेत्पश्चाद्भूषणाच्छादनादिभिः ॥ गामेकांकपिलांदद्याद्व्रत २४
संपूर्तिहेतवे ॥ ४४॥ पयस्विनींसुशीलांचसवत्सांसगुणांतथा ॥ स्वर्णशृंगींरौप्यखुरांकांस्यदोहनिकायुताम् ॥ ४५ ॥
मुक्तापुच्छांताम्रपृष्ठींस्वर्णघंटासमन्विताम् ॥ वस्त्रच्छन्नांदक्षिणाढ्यामेवंसंपूर्णतामियात् ॥ ४६ ॥ कपिलायाअभावे
पिगौरन्यापिप्रदीयते ॥ ततःप्रदद्यादृत्विग्भ्योदक्षिणांचयथार्हतः ॥ ४७ ॥ ब्राह्मणान्भोजयेत्पश्चादष्टौतेभ्यश्चदक्षि
णाम् ॥ कलशाञ्जलसंपूर्णान्दद्याच्चैवसमाहितः ॥ ४८ ॥ प्राप्यानुज्ञांतथातेभ्योभुंजीतसहबंधुभिः ॥ एवंकृतेब्रह्मपुत्र
व्रतोद्यापनकर्मणि ॥ ४९ ॥ निष्पापस्तत्क्षणादेवजायतेविबुधोत्तमः ॥ पुत्रपौत्रसमायुक्तोधनधान्यसमन्वितः ॥ भु
क्त्वाभोगांश्चिरंकालमंतेवैकुंठमाप्नुयात् ॥ ५० ॥ ॥ इतिश्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्वरसनत्कुमारसंवादेकृ
ष्णजन्माष्टमीव्रतकथनंनामत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ईश्वरउवाच ॥ पुराकल्पेब्रह्मपुत्रदैत्यभारप्रपीडिता ॥ब्रह्माणंशरणंप्रापपृथ्वीदीनातिविह्वला ॥ १ ॥वृत्तांतंतन्मुखाच्छ्रु
त्वाब्रह्मादेवगणैःसह ॥ क्षीरार्णवेहरिंगत्वातुष्टावस्तुतिभिर्बहु ॥ २ ॥ प्रादुरासीत्ततोदिक्षुश्रुत्वासर्वैविधेर्मुखात् ॥ माभैष्ट ॥ ४२ ॥

देवादेवक्याजठरेवसुदेवतः॥ ३॥अवतीर्णोभाविष्यामिहरिष्येभूमिवेदनाम्॥भवंतुयादवादेवाइत्युक्त्वांऽतर्दधेविभुः॥४
देवक्याजठरेजातोवसुदेवेनगोकुले ॥ स्थापितःकंसभीतेनववृधेतत्रकंसहा ॥ ५ ॥आगत्यमथुरांपश्चात्कंसःसगणमा
हनत् ॥ ततःसर्वेपौरजनाःप्रार्थयामासुरादरात् ॥ ६ ॥ कृष्णकृष्णमहायोगिन्भक्तानामभयप्रद ॥ प्राणत्रान्पाहि
नोदेवशरणागतवत्सल ॥ ७ ॥ किंचिद्विज्ञापयेदेवएतन्नोवक्तुमर्हसि ॥ तवजन्मदिनेकृत्यंनज्ञातंकेनचित्क्वचित् ॥
॥ ८ ॥ ज्ञात्वाचतद्दिनेसर्वेकुर्मोवर्द्धापनोत्सवम् ॥ तेषांदृष्ट्वाचतांभक्तिंस्वस्मिन्श्रद्धांचसौहृदम् ॥ ९ ॥ कृत्यंजन्म
दिनेतेभ्यःकथयामासकेशवः ॥ श्रुत्वातेपितथाचक्रुर्विधानात्तेनतद्व्रतम् ॥ १० ॥ वरांश्चबहुधाप्रादाद्भगवान्व्रतका
रिणे ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ ११ ॥ अंगदेशोद्भवोराजामितजिन्नामनामतः ॥ तस्यपुत्रोमहासे
नःसत्यजित्सत्पथेस्थितः ॥ १२ ॥ पालयामाससर्वज्ञोविधिवद्रंजयन्प्रजाः ॥ तस्यैवंवर्तमानस्यकदाचिद्दैवयोगतः॥
॥ १३ ॥ पाखंडैःसहसंवासोवबभूवहुवासरम् ॥ तत्संसर्गात्सनृपतिरधर्मेनिरतोभवत् ॥१४॥ वेदशास्त्रपुराणानिनि
निंदबहुशोनृपः ॥ वर्णाश्रमगतेधर्मेविद्वेषंपरमंगतः ॥ १५ ॥ एवंबहुतिथेकालेप्रयातेमुनिसत्तम ॥ कालेननिधनं
प्राप्तोयमदूतवशंगतः ॥ १६॥ बध्वापाशैर्नीयमानोयमदूतैर्यमोंतिकम्॥ पीडितस्ताड्यमानोऽसौदुष्टसंगतियोगतः॥

॥ १७ ॥ नरकेपातितःप्रापयातनाबहुवत्सरं ॥ भुक्त्वापापस्यशेषेणपैशाचींयोनिमास्थितः॥ १८॥ क्षुधातृष्णासमा
क्रांतेभ्रमन्समरुधन्वसु ॥ कस्यचित्त्वथवैश्यस्यदेहमाविश्यसंस्थितः ॥ १९ ॥ सहतेनैवसंयातोमथुरांपुण्यदांपु
रीम् ॥ समीपेरक्षकैस्तस्यतस्माद्देहाद्बहिष्कृतः ॥ २० ॥ बभ्रामविपिनेसोथऋषीणामाश्रमेषुच ॥ कदाचिद्दैवयो
गेनहरेर्जन्माष्टमीदिने ॥ २१ ॥ क्रियमाणांमहापूजांव्रतिभिर्मुनिभिर्द्विजैः ॥ रात्रौजागरणंचैवनामसंकीर्तनादिभिः ॥
॥ २२ ॥ ददर्शसर्वंविधिवच्छुश्रावथहरेःकथाम् ॥ निष्पापस्तत्क्षणादेवशुद्धोनिर्मलमानसः॥ २३ ॥ प्रेतदेहंसमुत्सृ
ज्यविष्णुलोकेविमानगः ॥ यमदूतैःपरित्यक्तोदिव्यभोगसमन्वितः ॥ २४ ॥ विष्णुसान्निध्यमापन्नोव्रतस्यास्यप्रभा
वतः ॥ नित्यमेतद्व्रतंचैवपुराणेसार्वलौकिकम् ॥ २५ ॥ कथ्यतेविधिवत्सम्यङ्मुनिभिस्तत्त्वदर्शिभिः ॥ सर्वका
मिकमेवैतत्कृत्वाकामानवाप्नुयात् ॥ २६ ॥ एवंयःकुरुतेकृष्णजन्माष्टम्यांव्रतंशुभम् ॥ भुक्त्वेहविविधान्भोगान्शुभान्का
मानवाप्नुयात् ॥ २७॥ तत्रदेवविमानेनवर्षलक्षंविधेःसुत ॥ भोगान्नानाविधान्भुक्त्वापुण्यशेषादिहागतः॥ २८ ॥
सर्वकामसमृद्धस्तुसर्वाशुभविवर्जितः ॥ कुलेनृपतिवर्याणांजायतेमदनोपमः ॥ २९ ॥ यस्मिन्सदैवविषयेलिखितं
स्यात्परार्पितम् ॥ कृष्णजन्मोपकरणंसर्वशोभासमन्वितम् ॥ ३० ॥ पूज्यतेविश्वसृट्तत्रव्रतैरुत्सवसंयुतैः ॥ परच

क्भयंतत्रनकदाचिद्भविष्यति ॥ ३१ ॥ पर्जन्यःकामवर्षीस्यादीतिभ्योनभयंक्वचित् ॥ गृहेवापूजयेद्यस्तुचरितंदेव
कीजनः ॥ ३२ ॥ तत्रसर्वसमृद्धंस्यान्नोपसर्गाद्भयंभवेत् ॥ संसर्गेणापियोभक्त्याव्रतंपश्येदनाकुलः ॥ सोपिपापवि
निर्मुक्तःप्रयातिहरिमंदिरम् ॥ ३३ ॥ ॥ इतिश्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्वरसनत्कुमारसंवादेज
न्माष्टमीव्रतकथनंनामचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ ईश्वरउवाच ॥ ॥ अथवक्ष्येमुनिश्रेष्ठपिठोरीव्रतमुत्तमम् ॥ अमायांश्रावणेमासिसर्वसंपत्प्रदायकम् ॥ १ ॥ सर्वा
धिष्ठानमेतद्यद्गृहंपीठंततोमतम् ॥ आरंभोत्रसमूहस्यवस्तुमात्रस्यपूजने ॥ २ ॥ पिठोरीइतिसंज्ञाचव्रतस्यातोमुनी
श्वर ॥ तत्प्रकारंचवक्ष्येहंसावधानमनाःशृणु ॥ ३ ॥ कुड्येविलिख्यताम्रेणकृष्णेनाऽथसितेनवा ॥ धातुनातत्रताम्रे
तुपीतेनविलिखेत्सुधीः ॥ ४ ॥ शुक्लेनवाथकृष्णेनपूर्ववच्चैवसंलिखेत् ॥ सितपीतेनरक्तेनकृष्णेनहरितेनवा ॥ ५ ॥
मध्येशिवंशिवायुक्तंलिंगंवामूर्तिमेववा ॥ विस्तीर्णंकुड्यमालिख्यसर्वसंसारमालिखेत् ॥ ६ ॥ चतुःशालासमायुक्तं
पाकागारंसुरालयम् ॥ शय्यागृहंसप्तकोशांस्तथांतःस्त्रीनिकेतनम् ॥ ७ ॥ प्रासादाट्टालिकाशोभंशालवृक्षसमुद्भव
म् ॥ इष्टकाभिश्चपाषाणैश्चूर्णनद्धैःसुशोभनम् ॥ ८ ॥ द्वाराणिचविचित्राणिवलभीचेष्टिकास्तथा ॥ अजागावोमहि

ष्यश्वअश्वाउष्ट्रमतंगजाः ॥ ९ ॥ गंत्रीरथप्रभृतयःशकटानांप्रभेदकाः ॥ स्त्रियोबालाश्ववृद्धाश्वतरुण्यःपुरुषास्तथा
॥ १० ॥ पालक्यांदोलिकाचैवमंचकाबहुरूपकाः ॥ ११ ॥ हैमानिरौप्यानिचताम्रकाणिसैसानिलौहानिचमृन्म
यानि ॥ रंगप्रसूतानिचपैत्तलानिपात्राणिनानाविधकारकाणि ॥ १२ ॥ यावंतःकशिपूभेदाउपबर्हणजातयः ॥ मा
र्जाराःसारिकाश्चैवशुभाअन्येपिपक्षिणः ॥ १३ ॥ पुरुषाणामलंकाराःस्त्रीणांचैवाप्यनेकशः ॥ यानिचास्तरणानी
हतथाप्रावरणानिच ॥ १४ ॥ यज्ञपात्राणियावंतिस्तंभदंडौचमंथने ॥ रज्जुत्रयंचतद्धेतुदुग्धंचनवनीतकम् ॥ दधि
तक्रंतथामस्तुआज्यंतैलंतिलांस्तथा ॥ १५ ॥ गोधूमशालितुवरीयवयावनालवार्तानलंचचणकामसुराःकुलित्थाः॥
मुद्गप्रियंगुतिलकोद्रवकातसीतिश्यामाकमाषचवलाइतिधान्यवर्गाः ॥ १६ ॥ दृषदंचोपलंचुल्लिंतथासंमार्जनीमपि॥
पुरुषाणांचवस्त्राणिनारीणांचैवसर्वशः ॥ १७ ॥ वेणुजन्यंचशूर्पादितथातृणभवानिच ॥ उलूखलंचमुसलंयंत्रंदल
युगान्वितम् ॥ १८ ॥ व्यजनंचामरंछत्रमुपानत्पादुकाद्वयम् ॥ दास्योदास्याभृत्यपोष्याःपशुभक्ष्यंतृणादिकम् ॥
॥ १९ ॥ धनुर्बाणशतद्व्यश्वखड्गाःकुंताश्वशक्तयः ॥ चर्मपाशांकुशगदास्त्रिशूलंभिंदिपालकाः ॥ २० ॥ तोमरोमुद्ग
रश्चैवपरशुःपट्टिशस्तथा ॥ भुशुंडीपरिघश्चैवचक्रयंत्रादिकंचयत् ॥ २१ ॥जलयंत्रामषीपात्रंलेखनीपुस्तकादिकम् ॥

फलजातंसर्वमपिछुरिकाकर्तरीतथा ॥ २२ ॥ ॥ नानाविधानिपुष्पाणिबिल्वश्वतुलसीतथा ॥ दीपिकाश्चैवदीपाश्चत
थातत्साधनानिच ॥ २३ ॥ शाकंनानाविधंभक्ष्यंपक्वान्नानांचयाभिदः ॥ लेख्यंतच्चैवसकलमनूक्तमपिचैवहि ॥२४॥
कियल्लेख्यंजनेनात्रवक्तव्यंवामयाकियत् ॥ एकैकस्यपदार्थस्यभेदाःशतसहस्रशः ॥ २५॥ उपचारैःषोडशभिःसर्वे
षांपूजनंभवेत् ॥ नानाविधश्चगंधःस्यात्पुष्पधूपोपिचंदनम् ॥ २६॥ ब्राह्मणान्भोजयेद्बालान्सुवासिन्यश्चपुष्कलान्॥
प्रार्थयेच्चशिवंसांबंव्रतंसंपूर्णमस्त्विति ॥ २७॥ शिवसांबदयासिंधोगिरीशशशिशेखर ॥ व्रतेनानेनसंतुष्टःप्रयच्छास्मा
न्मनोरथान् ॥ २८॥ एवंकृत्वापंचवर्षंततउद्यापनंचरेत् ॥ आज्येनबिल्वपत्रैश्चहोमःस्याच्छिवमंत्रतः॥२९ ॥ ग्रहहो
मःपुराकार्यःपूर्वेद्युरधिवासनम् ॥ अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा ॥ ३० ॥ होमसंख्याभवेद्वत्सआचार्यंपूजयेत्ततः॥
भूयसींदक्षिणांदद्यात्स्वयंभोजनमाचरेत् ॥ ३१ ॥ इष्टबंधुजनैःसार्धंकुटुंबसहितोबुधः ॥ एवंकृतेविधानेनसर्वान्कामा
नवाप्नुयात् ॥ यद्यदिष्टतमंलोकेतत्सर्वंलभतेनरः ॥ ३२ ॥ एतत्तेकथितंवत्सपिठोरीव्रतमुत्तमम् ॥ व्रतेनानेनसदृशंस
र्वकामसमृद्धिदम् ॥ ३३ ॥ शिवप्रीतिकरंचैवनभूतंनभविष्यति ॥ भित्तौयद्यल्लिखेद्वस्तुतत्तदाप्नोतिनिश्चितम् ॥ ३४॥
॥इतिश्रीस्कंद० श्रावणमासमाहात्म्येईश्वरसनत्कुमारसंवादेअमावास्यायांपिठोरीव्रतकथनंनामपंचविंशोऽध्यायः ॥

॥ ईश्वरउवाच ॥ ॥ यत्कर्तव्यंनभोमासिअमावास्यादिनेभवेत् ॥ प्रसंगतश्चयच्चान्यत्स्मृतंतदपितेब्रुवे ॥ १ ॥ पुरा
नानाविधैर्दैत्यैर्महाबलपराक्रमैः ॥ जगद्विध्वंसकैर्दुष्टैर्देवतोच्छेदकारिभिः ॥ २ ॥ संग्रामाबहवोजाताआरुह्यवृषभंशुभ
म् ॥ महासत्त्वोमहावीर्योनकदाचिज्जहौचमाम् ॥ ३ ॥ अंधकासुरयुद्धेतुतेनछिन्नतनुःकृतः ॥ भिन्नत्वग्रुधिरस्त्रावीप्राण
मात्रावशेषितः ॥ ४ ॥ तथापिधैर्यमालंब्ययावद्धन्मिचतंखलम् ॥ उवाहतावन्मांनंदीतस्यतज्ज्ञातवानहम् ॥ ५ ॥
हत्वातमंधकंदैत्यंतुष्टोहंनंदिनंतदा ॥ कर्मणातेप्रसन्नोस्मिवरंवरयसुव्रत ॥ ६ ॥ व्रणास्तेप्रशमंयांतुनिरोगोबलवान्भ
व ॥ पूर्वस्मादपितेवीर्यंरूपंचापिविवर्धताम् ॥ ७ ॥ यंयंवरंयाचसेत्वंतंतंदास्याम्यसंशयम् ॥ ८ ॥ नंदिकेश्वरउवाच॥
ममास्तियाचनीयंनदेवदेवमहेश्वर ॥ ममोपरिप्रसन्नोसिकिंवैभवमतःपरम् ॥ ९ ॥ तथापिभगवन्याचेलोकोपकृतये
शिव ॥ अद्यामाश्रावणस्यास्तियस्यांतुष्टोभवान्मम ॥ १० ॥ एतस्यांवृषभाःपूज्यागोभिर्युक्ताःसुमृन्मयाः ॥ अद्यैवामा
दिनेजन्मकामधेनूपमंभवेत् ॥ ११ ॥ अतोप्यस्यांवरंदेहिभवत्वेषेच्छितप्रदा ॥ प्रत्यक्षंवृषभागावःपूजनीयाश्चभक्ति
तः ॥ १२ ॥ धातुभिर्गैरिकाद्यैश्चभूषणीयाःप्रयत्नतः ॥ शृंगेपुस्वर्णरौप्यादिपट्टिकाबंधशोभनम् ॥ १३ ॥ कौशेयगु
च्छान्महतःशृंगयोरपिबंधयेत् ॥ पृष्ठंनानाविधैर्वर्णैश्चित्रितेनसुवाससा ॥ १४ ॥ आच्छादयेद्गलेघंटांबध्नीयाद्रम्यश

ब्दिताम् ॥ दिनाष्टांशेबहिर्नीत्वासायंग्रामंप्रवेशयेत् ॥ १५ ॥ पिण्यातकंचनैवेद्यंअन्नंनानाविधंचयत् ॥ अर्पयेत्तस्यभ
वतुगोधनंवृद्धिगंसदा ॥ १६ ॥ गावोयत्रगृहेनस्युःस्मशानसदृशंचतत् ॥ पंचामृतंपंचगव्यंनभवेद्गोरसंविना॥ १७॥
संमार्जनंपूततमंगोमयेनविनानहि ॥ पिपीलिकादिजंतूनामुपसर्गाश्चतत्रहि ॥ १८॥ प्रोक्षणंयत्रगोमूत्रान्नभवेच्चसुरो
त्तम ॥ भोजनस्यमहादेवकोरसोगोरसंविना ॥ १९ ॥ एतेन्येपिवरादेयाःप्रसन्नोसियदिप्रभो ॥ इतिनंदिवचःश्रुत्वातु
ष्टोहमविकंतदा ॥ २० ॥ सर्वमस्तुवृषश्रेष्ठयथातेयाचितंतथा ॥ अन्यच्चशृणुभोनंदिन्नामास्यतुदिनस्ययत्
॥ २१ ॥ नवाह्यतेयोवृषभःकेनचित्कर्मणिक्वचित् ॥ तृणमश्नन्पिबन्नीरंतूष्णींयोवर्धतेवृषः ॥ २२ ॥ महावीरश्चबल
वान्पोलइत्युच्यतेहिसः ॥ तन्नाम्नेदंदिनंनंदिन्पोलाइतिभविष्यति ॥ २३ ॥ तत्रोत्सवोमहान्कार्यइष्टबंधुजनैःसह ॥
इतिदत्तामयाधत्स्ववराःश्रेष्ठाहितद्दिने ॥ तेनश्रेष्ठदिनंचैतत्पोलासंज्ञंमतंजनैः ॥ २४॥ अत्रोत्सवोमहान्कार्योवृषाणां
सर्वकामदः ॥ अतःपरंप्रवक्ष्यामिअस्यामेवकुशग्रहम् ॥ २५ ॥ नभोमासस्यदर्शेतुशुचिर्दर्भान्समाहरेत् ॥ अयातया
मास्तेदर्भाविनियोज्याःपुनःपुनः ॥ २६ ॥ कुशाःकाशायवादूर्वाउशीराश्चसकूदकाः ॥ गोधूमांव्रीहयोमौंज्यादशदर्भाः
सबल्वजाः ॥ २७ ॥ विरिंचिनासहोत्पन्नपरमेष्ठीनिसर्गज ॥ नुदपापानिसर्वाणिदर्भस्वस्तिकरोभव ॥ २८ ॥ एवंसन्मं

त्रमुच्चार्यततःपूर्वोत्तरामुखः ॥ हुंफट्कारेणमंत्रेणसकृच्छित्वासमुद्धरेत् ॥ २९ ॥ अछिन्नाग्राअशुष्काग्राःपैत्रेतुहरिताः
स्मृताः ॥ अमूलादेवकार्येषुप्रयोज्याश्वजपादिषु ॥ ३० ॥ सप्तपत्राःकुशाःशस्तादैवेपित्र्येचकर्मणि ॥ अनंतर्गर्भिणौ
साग्रौप्रादेशौचपवित्रके ॥ ३१ ॥ चतुर्भिर्दर्भपिंजूलैःपवित्रंब्राह्मणस्यतु ॥ एकैकंन्यूनमुद्दिष्टंवर्णेवर्णेयथाक्रमम् ॥
॥ ३२ ॥ सर्वेषांवाभवेद्द्वाभ्यांपवित्रंग्रंथिशोभितम् ॥ इदंतुधारणार्थंस्यात्पवित्रंकथितंतव ॥ ३३ ॥ दर्भद्वयंतुसर्वेषांभ
वदुत्पवनायच ॥ पंचाशताभवेद्ब्रह्मातदर्धेनतुविष्टरः ॥ ३४ ॥ निष्काशनीयंनोहस्तादाचमेतुपवित्रकम् ॥ विकिरेन्नौक्त
तेचैवकृतेपाद्येतुसंत्यजेत् ॥ ३५ ॥ नास्तिदर्भसमंपुण्यंपवित्रंपापनाशनम् ॥ दर्भाधीनानिकर्माणिदैवपित्र्याणिसर्वशः
॥ ३६ ॥ तादृग्विधानांदर्भाणाममायांग्रहणंभवेत् ॥ अयातयामताचैवकिंवर्ण्याऽमानभस्यतः ॥ ३७ ॥ इत्येतत्क
थितंकृत्यममायांश्रावणेतुयत् ॥ अन्यच्चश्रावणेकृत्यंतच्चापिकथयामिते ॥ ३८ ॥ इतिश्रीस्कंदपुराणेश्रावणमासमा
हात्म्येईश्वरसनत्कुमारसंवादेअमायांवृषभपूजनंकुशग्रहणंनामषड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥ छ ॥
॥ ईश्वरउवाच ॥ ॥ अथातःश्रावणेकर्कसिंहसंक्रांतिसंभवः ॥ प्राप्यतेतत्रयत्कृत्यंतच्चापिकथयामिते ॥ १ ॥ सिंह
कर्कटयोर्मध्येसर्वानद्योरजस्वलाः ॥ तासुस्नानंनकुर्वीतवर्जयित्वासमुद्रगाः ॥ २ ॥ अगस्त्योदयपर्यंतंकेचिदूचुर्महर्षयः ॥

यावन्नोदेतिभगवान्दक्षिणाशाविभूषणः ॥ ३ ॥ तावद्रजोवहानद्यअल्पतोयाःप्रकीर्तिताः ॥ याशेषमुपगच्छंतिग्रीष्मे
तुसरितोभुवि ॥ ४ ॥ तासुप्रावृषिनस्नायादपूर्णेदशवासरे ॥ धेनुःसहस्राण्यष्टौचगतिर्यासांस्वतोनहि ॥ ५ ॥ नता
नदीशब्दवाच्यागर्तास्तेपरिकीर्तिताः ॥ प्रारंभेकर्कसंक्रातेर्महानद्योरजस्वलाः ॥ ६ ॥ त्रिदिनंतुचतुर्थेह्निशुद्धाःस्यु
र्योषितोयथा ॥ महानदीःप्रवक्ष्यामिशृणुष्वावहितोमुने ॥ ७ ॥ गोदावरीभीमरथीतुंगभद्राचवेणिका ॥ तापीपयोष्णी
विंध्यस्यदक्षिणेषट्प्रकीर्तिताः॥८॥भागीरथीनर्मदाचयमुनाचसरस्वती ॥विशोकाचवितस्ताचमध्येस्योत्तरतोपिषट्
॥ ९ ॥ द्वादशैतामहानद्योदेवर्षिक्षेत्रसंभवाः ॥ महानद्योदेविकाचकावेरीवंजरातथा ॥ १० ॥ कृष्णारजस्वलाए
ताःकर्कटादौत्र्यहंनृप ॥ कर्कटादौरजोदुष्टागौतमीवासरत्रयम् ॥ ११ ॥ चंद्रभागासतीसिंधुःशरयूर्नर्मदातथा ॥ गंगा
चयमुनाचैवप्लक्षजालासरस्वती ॥ १२ ॥ रजसानाभिभूयंतेयेचान्येनदसंज्ञिताः ॥ शोणःसिंधुर्हिरण्याख्यःकोकि
लाहितघर्घराः ॥ १३ ॥ शतद्रुश्चनदाःसप्तपावनाःपरिकीर्तिताः ॥ गंगाधर्मद्रवःपुण्यायमुनाचसरस्वती ॥ १४ ॥
अंतर्गतारजोदोषाःसर्वावस्थासुचामलाः ॥ अपामयंरजोदोषोनभवेत्तीरवासिनाम् ॥ १५ ॥ जलंरजोदुष्टमपिगंगा
तोयेनपावनम् ॥ अजागावोमहिष्यश्चयोषितश्चप्रसूतिकाः ॥ १६ ॥ भूमेर्नवोदकंचैवदशरात्रेणशुध्यति ॥ अभावे

कूपवापीनामन्यासांचपयोमृतम् ॥ १७ ॥ रजोदुष्टेपिवयसिग्रामभोगोनदुष्यति ॥ अन्येनचोद्धतेनीरेरजोदोषोन
विद्यते ॥ १८ ॥ उपाकर्मणिचोत्सर्गेप्रातःस्नानेविपत्सुच ॥ चंद्रसूर्यग्रहेचैवरजोदोषोनविद्यते ॥ १९ ॥ अतःपरं
प्रवक्ष्यामिसिंहेगोप्रसवोयदि ॥ भानौसिंहगतेचैवयस्यगौःसंप्रसूयते ॥२०॥मरणंतस्यनिर्दिष्टंषड्भिर्मासैर्नसंशयः॥
तत्रशांतिंप्रवक्ष्यामियेनसंपाद्यतेसुखम् ॥ २१ ॥ प्रसूतांतत्क्षणादेवतांगांविप्रायदापयेत् ॥ ततोहोमंप्रकुर्वीतघृता
क्तैराजसर्षपैः ॥ २२ ॥ आहुतीनांघृताक्तानांतिलानांजुहुयात्ततः ॥ सहस्रेणव्याहृतिभिरष्टसंख्याधिकेनच॥२३॥
सोपवासःप्रयत्नेनदद्याद्विप्रायदक्षिणाम् ॥ सिंहराशौगतेसूर्येगोष्ठसूतिर्यदाभवेत् ॥ २४ ॥ तदानिष्टंभवेत्किंचित्तच्छां
त्यैशांतिकंचरेत् ॥ अस्यवामेतिसूक्तेनतद्विष्णोरितिमंत्रतः ॥ २५ ॥ जुहुयाच्चतिलाज्येनशतमष्टोत्तराधिकम् ॥
मृत्युंजयविधानेनजुहुयाच्चतथायुतम् ॥ २६ ॥ श्रीसूक्तेनततःस्नायाच्छांतिसूक्तेनवापुनः ॥ एवंकृतविधानेननभयं
जायतेक्वचित् ॥ २७ ॥ एवमेवनभोमासिसूयेतवडवादिने ॥ अत्रापिशांतिकंकार्यंतदादोषोविनश्यति ॥ २८ ॥
कर्केसिंहेनभोदानमथवक्ष्येशुभप्रदम् ॥ घृतधेनुप्रदानंचकर्कटस्थेदिवाकरे ॥२९॥सस्तुवर्णछत्रदानंशस्तंसिंहेनिग
द्यते॥श्रावणेवस्त्रदानस्यकीर्तितंसुमहत्फलम्॥३०॥घृतंचघृतकुंभाश्वघृतधेनुःफलानिच॥श्रावणेश्रीधरप्रीत्यैदात

व्यानिविपश्चिते ॥ ३१ ॥ अन्यान्यपिचदानानिमत्तोषायकृतानिच ॥ अक्षय्यफलदानिस्युरन्यमासेभ्यएवहि ॥
॥ ३२ ॥ द्वादशस्वपिमासेषुनास्तिचैतादृशःप्रियः ॥ आगच्छतिनभोमासिप्रतीक्षांचकरोम्यहम् ॥ ३३ ॥ करिष्य
तेव्रतंयोत्रसमेप्रियतरोभवेत् ॥ ब्राह्मणानांविधूराजासूर्यःप्रत्यक्षदैवतम् ॥ ३४ ॥ ममाक्षिणीतयोरत्रसंक्रांतीभवतो
यतः॥ कर्कसंज्ञासिंहसंज्ञामाहात्म्यंकिमतःपरम्॥ ३५॥ प्रातःस्नानंमासमात्रमत्रयःकुरुतेनरः॥ द्वादशस्वपिमासेषुप्रातः
स्नानफलंलभेत् ॥ ३६ ॥ नकरोतिनभोमासिप्रातःस्नानंयदानरः ॥ द्वादशस्वपिमासेषुकृतंनिष्फलतामियात् ॥
॥ ३७ ॥ महादेवदयासिंधोश्रावणेमासिसंयुतः ॥ प्रातःस्नानंकरिष्यामिनिर्विघ्नंकुरुमेप्रभो ॥ ३८ ॥ स्नात्वाशिवंस
मभ्यर्च्यनभोमाहात्म्यसत्कथाम् ॥ शृणुयात्प्रत्यहंभक्त्याएवंमासंनयेत्सुधीः ॥ ३९ ॥ अन्यत्रमासःकृष्णादिरत्रशु
क्लादिरिष्यते ॥ नभोमासकथायास्तुमाहात्म्यंकेनवर्ण्यते ॥ ४० ॥ सप्तधापिचयावंध्यासापुत्रंलभतेशुभम् ॥ वि
द्यार्थीलभतेविद्यांबलार्थीलभतेबलम् ॥ ४१ ॥ रोगीचारोग्यमाप्नोतिबद्धोमुच्येतबंधनात् ॥ धनंधनार्थीलभतेधर्मं
चैवरतिर्भवेत् ॥ ४२ ॥ भार्यार्थीलभतेभार्यांकिंबहूक्तेनमानद ॥ यद्यत्कामयतेतत्तत्प्राप्नोत्यत्रनसंशयः ॥ ४३ ॥
अंतेममपुरंप्राप्यमोदतेममसन्निधौ ॥ पूजयेद्वाचकंसम्यग्वासोलंकरणादिभिः ॥ ४४ ॥ वाचकस्तोषितोयेनतेना

हंतोषितःशिवः ॥ श्रुत्वाश्रावणमाहात्म्यंवाचकंयोनपूजयेत् ॥ ४५ ॥ छिनत्तिरविजस्तस्यकर्णंसबधिरोभवेत् ॥
तस्माच्छत्त्याप्रकुर्वीतवाचकस्यसुपूजनम् ॥ ४६ ॥ इदंश्रावणमाहात्म्यंयःपठेच्छृणुयादपि॥श्रावयेद्वापिसद्भक्त्या
तस्यपुण्यमनंतकम् ॥ ४७ ॥ ॥ इतिश्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्वरसनत्कुमारसंवादेनदीरजोदोषसिंह
गोप्रसवसिंहकर्कटश्रावणस्तुतिवाचकपूजाकथनंनामसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ छ ॥ ॥ छ ॥
॥ ईश्वरउवाच ॥ ॥ अतःपरंप्रवक्ष्यामिअगस्त्यार्घ्यविधिंपरम् ॥ येनचीर्णेनवैधात्रसर्वान्कामानवाप्नुयात् ॥ १ ॥
कालस्तस्यचविज्ञेयःअगस्त्यस्योदयात्पुरा ॥ सप्तरात्रार्द्धवेद्यावदुदयःसप्तरात्रकम् ॥ २ ॥ दद्यादर्घ्यंप्रत्यहंचतद्वि
धिंतेवदाम्यहं ॥ प्रातःशुक्लतिलैःस्नात्वाशुक्लमाल्यांबरोगृही ॥ ३ ॥ स्थापयेदव्रणंकुंभंसुवर्णादिविनिर्मितम् ॥ पंच
रत्नसमायुक्तंघृतपात्रेणसंयुतम्॥४ ॥ नानाभक्ष्यफलैर्युक्तंमाल्यवस्त्रविभूषितम्॥ ताम्रेणपूर्णपात्रेणउपरिस्थेनभूषि
तम् ॥ ५ ॥ कुंभोद्भवस्यप्रतिमांतत्रपात्रेनिधापयेत् ॥ अंगुष्ठमात्रंपुरुषंसौवर्णंचचतुर्भुजम् ॥ ६ ॥ पीनात्यायत
दोर्दंडंदक्षिणाभिमुखंमुनिम् ॥ सुशोभनंप्रशांतंचजटामंडलधारिणम्॥ ७ ॥ कमंडलुकरंशिष्यैर्बहुभिःपरिवारितम्॥
यथादर्भाक्षतधरंलोपामुद्रासमन्वितम् ॥ ८ ॥ आवाहयेत्पूजयेच्चगंधपुष्पादिभिस्तथा ॥ उपचारैःषोडशभिर्नैवेद्यै

बहुविस्तरैः ॥ ९ ॥ दध्योदनबलिंदद्याद्भक्तियुक्तेनचेतसा ॥ ततश्चार्घःप्रदातव्यस्तस्यचैवंविधिंशृणु ॥१० ॥ सौव
र्णेवाथरौप्येवाताम्रेवेणुमयेथवा ॥ पात्रेनारिंगखर्जूरनारिकेलफलानिच ॥ ११ ॥ कूष्मांडकारवल्लीनिकदलीदाडिमा
निच ॥ वृंताकबीजपूराणिअक्षोटाःपिस्तकास्तथा ॥ १२ ॥ नीलोत्पलानिपद्मानिकुशदूर्वांकुरास्तथा ॥ अन्यान्य
पिचसाध्यानिफलानिकुसुमानिच ॥ १३ ॥ नानाप्रकारभक्ष्याणिसप्तधान्यानिचैवहि ॥ सप्तांकुराःपल्लवाश्चपंचवस्त्रा
णिचैवहि ॥ १४ ॥ एतान्पदार्थान्संस्थाप्यपात्रंसम्यक्प्रपूजयेत् ॥ जानुभ्यामवनिंगत्वातत्पात्रंनम्रमूर्धनि ॥१५ ॥
धृत्वावाचिमुखोभूत्वाध्यायेत्कुंभोद्भवंमुनिम् ॥ दद्यादर्घ्यंप्रयत्नेनश्रद्धाभक्तिपुरःसरम् ॥ १६ ॥ काशपुष्पप्रतीकाशव
ह्निमारुतसंभव ॥ मित्रावरुणयोःपुत्रकुंभयोनेनमोस्तुते ॥ १७ ॥ विंध्यवृद्धिक्षयकरमेघतोयविषापह ॥ रत्नवल्लभदे
वर्षेलंकावासनमोस्तुते ॥ १८ ॥ आतापीभक्षितोयेनवातापीचमहाबलः ॥ लोपामुद्रापतिःश्रीमान्योसौतस्मैनमो
नमः ॥ १९ ॥ येनोदितेनपापानिविलयंयांतिचाधयः ॥व्याधयस्त्रिविधास्तापास्तस्मैनित्यंनमोनमः॥ २० ॥यादपू
र्णसरिन्नाथोयेनवैशोषितःपुरा ॥ सपुत्रायसशिष्यायसपत्नीकायवैनमः ॥ २१ ॥ अगस्त्यस्यायमर्घ्योवैद्विजातिर्वेद
मंत्रतः ॥ शूद्रःपौराणमंत्रेणदत्त्वार्घ्यंप्रणमेत्सुधीः ॥ २२ ॥ राजपुत्रिमहाभागेऋषिपत्निवरानने ॥ लोपामुद्रेनमस्तु

भ्यमर्घ्यंमेप्रतिगृह्यताम् ॥ २३ ॥ ततोहोमंप्रकुर्वीतअर्घ्यमंत्रेणमंत्रवित् ॥ आज्येनाष्टसहस्त्रंवाशतमष्टोत्तरंतुवा ॥
॥ २४ ॥ कृत्वैवंचततोगस्त्यंप्रणिपत्यविसर्जयेत् ॥ अचिंत्यचरितागस्त्ययथागस्त्यःप्रपूजितः ॥ २५ ॥ ऐहीकामु
ष्मिकंगत्वाकार्यसिद्धिंव्रजस्वभो ॥ विसर्जयित्वागस्त्यंतंविप्रायप्रतिपादयेत् ॥ २६ ॥ वेदवेदांगविदुषेदरिद्रायकुटुं
बिने ॥ अगस्त्योद्विजरूपेणप्रतिगृह्णातुसत्कृतः ॥ २७ ॥ अगस्त्यःप्रतिगृह्णातिअगस्त्योवैददातिच ॥ उभयोस्तार
कोगस्त्योअगस्त्यायनमोनमः ॥ २८ ॥ मंत्रद्वयेनदद्यात्तुब्राह्मणस्यजपेदमुम् ॥ वैदिकंपूर्वंविहितंपौराणंशूद्रएवतु॥
॥ २९ ॥ श्वेतांधेनुंततोदद्याद्धेमशृंगींपयस्विनीम् ॥सहवत्सांरौप्यखुरांताम्रपृष्ठींसुशोभनाम् ॥ ३० ॥ कांस्यदोहनि
कायुक्तांघंटावस्त्रसमन्विताम् ॥ एवंसप्तदिनंदत्त्वाअर्घ्यंप्रागुदयान्मुने ॥ ३१ ॥ सप्तमेदिवसेधेनुंप्रदद्याच्चसदक्षिणा
म् ॥ एवंकृत्वासप्तवर्षमकामश्चेन्नजन्मभाक् ॥ ३२ ॥ सकामश्चक्रवर्तित्वंरूपारोग्यसमन्वितः ॥ ब्राह्मणःस्याच्चतुर्वे
दसर्वशास्त्रविशारदः ॥ ३३ ॥ क्षत्रियःपृथिवींसर्वांप्राप्नोत्यर्णवमेखलाम् ॥वैश्यश्चेद्धान्यनिष्पत्तिंगोधनंचापिविंदति॥
॥ ३४ ॥ शूद्राणांधनमारोग्यंसत्यंचैवाधिकंभवेत् ॥ स्त्रीणांपुत्राःप्रजायंतेसौभाग्यगृहसमृद्धिमत् ॥ ३५ ॥ विधवानां
महत्पुण्यंवर्धतेविधिनंदन ॥ कन्याभर्तारमाप्नोतिव्याधेर्मुच्येतदुःखितः ॥ ३६ ॥ येषुदेशेष्वगस्त्यस्यपूजनंक्रियते

नरैः ॥ तेषुदेशेषुपर्जन्यःकामवर्षींप्रजायते ॥ ३७॥ ईतयःप्रशमंयांतिनश्यंतिव्याधयस्तथा ॥ पठंतियेत्वगस्त्य
स्यअर्घ्यंशृण्वंतिकेचन ॥ ३८॥ तेसर्वेपापनिर्मुक्ताश्चिरंस्थित्वामहीतले ॥ हंसयुक्तविमानेनस्वर्गेयांतिनरोत्तमाः ॥
॥ ३९ ॥ यावज्जीवंकरिष्यंतिनिष्कामंमुक्तिभागिनः ॥ ४० ॥ ॥ इतिश्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्वरसन
त्कुमारसंवादेअगस्त्यार्घ्यविधिर्नामाष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ ईश्वरउवाच ॥ ॥ सनत्कुमारवक्ष्यामिउक्तानांव्रतकर्मणाम् ॥ कालेकदातुकिंकार्यंतच्छृणुष्वमहामुने ॥ १ ॥का
तिथिःश्रावणेमासिकिंकालव्यापिनीभवेत् ॥ ग्राह्याप्रधानंकिंतत्रपूजाजागरणादिकम् ॥ २ ॥ तत्तत्कथनकालेतुके
षांचित्कालईरितः ॥ नक्तव्रतस्यकालस्तुउक्तस्तद्व्रतकर्मणि ॥ ३ ॥ प्रधानंरात्रिभुक्तिस्तुभोजनाभावयुग्दिवा ॥
उद्यापनंतुसर्वेषांतत्तद्व्रततिथौभवेत् ॥ ४ ॥ असंभवेतुपंचांगंशुद्धेस्यादधिवासनम् ॥ द्वितीयदिवसेकुर्याद्धोमादिवि
धिमादृतः ॥ ५ ॥ धारणापारणाचैवह्रासवृद्धीनकारणं ॥ नभःशुक्लप्रतिपदिसंकल्प्योपोषणंचरेत् ॥६ ॥द्वितीयदिव
सेभुक्तिस्ततोन्यस्मिन्नुपोषणम् ॥ एवंक्रमेणकुर्वीतहविष्याशीतुपारणे ॥ ७॥ एकादशीपारणाहेउपवासत्रयंतथा॥
रविवारव्रतार्चायाःकालःस्यात्प्रातरेवहि ॥ ८ ॥ सोमवारेप्रधानःस्यात्सायंकालःप्रकीर्तितः ॥ भौमेबुधेगुरौमुख्यः

प्रातःकालश्चपूजने ॥ ९ ॥ शुक्रवारेपूजनंस्यात्कल्पेरात्रौचजागरः ॥ नृसिंहपूजनेमंदेसायंकालश्चपूजनम् ॥ १० ॥
शनिव्रतेशनेर्दानेमध्याह्नोमुख्यइष्यते ॥ हनूमतोपिमध्याह्नःप्रातरश्वत्थपूजनम् ॥ ११ ॥ रोटकाख्येव्रतेवत्सप्रति
पत्सोमसंयुता ॥ त्रिमुहूर्तोत्तरासास्यादन्यथापूर्वयोगिनी ॥ १२ ॥ औदुंबरीद्वितीयातुसायाह्नव्यापिनीम
ता ॥ तृतीयासंयुताग्राह्यद्वयोश्चेत्पूर्ववेधिता ॥ १३ ॥ तृतीयास्वर्णगौर्याख्यासाचतुर्थीयुताभवेत् ॥ चतुर्थीगणनाथ
स्यमातृविद्धाप्रशस्यते ॥ १४ ॥ नागानांपूजनेशस्ताषष्ठीयुक्ताचपंचमी ॥ सूपौदनव्रतेषष्ठीसायाह्नेसप्तमीयुता ॥
॥ १५ ॥ मध्यान्हव्यापिनीग्राह्यासप्तमीशीतलाव्रते ॥ पवित्रारोपणेऽष्टम्यादेव्यारात्रियुतातिथिः ॥ १६ ॥ कुमा
रीनवमीनक्तव्यापिनीतुप्रशस्यते ॥ आशासंज्ञातुदशमीसानक्तव्यापिनीभवेत् ॥ १७ ॥ त्याज्याविद्धैकादशीतुतत्रवे
धंमुनेशृणु ॥ अरुणोदयवेधस्तुदशम्यावैष्णवान्प्रति ॥ १८ ॥ आदित्योदयवेधस्तुस्मार्तानांनिंद्यएवसः ॥ अरुणो
दयकालस्तुयामार्धंचरमंनिशि ॥ १९ ॥ एवंरीत्यायस्यभवेद्द्वादशीसापवित्रके ॥ त्रयोदशीत्वनंगस्यव्रतेस्याद्रात्रि
योगिनी ॥ २० ॥ द्वितीययामेतत्रापिसाप्रशस्ततराभवेत् ॥ पवित्रारोपणेशंभोरात्रिगास्याच्चतुर्दशी ॥ २१ ॥ अ
तिप्रशस्तातत्रापिनिशीथव्यापिनीतुया ॥ उपाकर्मणिचोत्सर्गेपूर्णिमाश्रवणंचभम् ॥ २२ ॥ त्रिमुहूर्तंद्वितीयेह्नितदा

ग्राह्यंपरंदिनम् ॥ नोचेदनुष्ठितःपूर्वंतैत्तिराणांचबह्वृचाम् ॥ २३ ॥ तैत्तिरीयांचयजुषांमुहूर्तंत्रयगामपि ॥ उत्तरस्मि
न्पूर्वमेवदिनंस्यात्कर्मणिद्वयोः ॥ २४ ॥ मुहूर्तानंतरंपूर्वंदिनेचेत्संगतिर्भवेत् ॥ पूर्णिमाश्रवणर्क्षंचमुहूर्तद्वितयात्पुरा ॥
॥ २५ ॥ उत्तरस्मिन्समाप्तंचेत्तदापूर्वंदिनंभवेत् ॥ हस्तभंत्वपराह्णेस्याद्ग्राह्यंतत्सामवेदिभिः ॥२६॥ दिनद्वयेतदा
स्याच्चेत्पूर्वमेवदिनंभवेत् ॥ उपाकर्मप्रयोगांतेकालोदीपस्यसंसदः ॥२७॥श्रवणाकर्मणिप्रोक्तःकालःसर्वबलौतथा॥
पर्वणोह्निभवेद्रात्रौस्वस्वगृह्यानुसारतः ॥ २८ ॥ पौर्णिमात्रप्रशस्तावास्यादस्तमययोगिनी ॥हयग्रीवोत्सवेपूर्णामध्या
ह्नव्यापिनीभवेत् ॥ २९ ॥ अपराह्णव्यापिनीस्याद्रक्षाबंधनकर्मणि॥ चंद्रोदयव्यापिनीचस्यात्संकष्टचतुर्थिका३०॥
उभयत्रयदासास्यान्नस्याद्वापूर्वगाभवेत् ॥ चतुर्थीचतृतीयायांमहापुण्यफलप्रदा ॥ ३१ ॥ कर्तव्याव्रतिभिर्वत्सगण
नाथसुतोषिणी ॥ गणेशगौरीबहुलाव्यतिरिक्ताःप्रकीर्तिताः ॥ ३२ ॥ चतुर्थ्यांपंचमीविद्धादेवतांतरपूजने ॥ निशी
थव्यापिनीग्राह्याकृष्णजन्माष्टमीतिथिः ॥ ३३ ॥ षट्प्रकारातुसर्वत्रनिर्णयेतिथिरिष्यते ॥ पूर्णव्याप्तिर्द्वयोरह्नोरव्या
प्तिरपिकेवला ॥ ३४ ॥ अंशतश्चसमाव्याप्तिरंशतोविषमातथा ॥ संपूर्णव्याप्तिरेकत्रअंशतश्चपरेहनि ॥ ३५ ॥
अंशतोव्याप्तिरेकत्रअव्याप्तिरपरत्रच ॥ पक्षत्रयेतुसंदेहोयथानास्तितथाशृणु ॥ ३६ ॥ अंशतोविषयव्याप्तावधिका

व्याप्तिरुत्तमा ॥ एकत्रपूर्णाचान्यत्रसापूर्णाचोच्यतेतिथिः ॥ ३७ ॥ अव्याप्तिरंशतोव्याप्तिस्तत्रांशव्याप्तिरुत्तमा ॥
अंशव्याप्तिर्यदापूर्णाअंशतश्चसमायदा ॥ ३८ ॥ संशयस्तत्रभवतितस्यस्यान्निर्णयोभिदा ॥ क्वचिद्ध्वेद्युग्मवाक्या
द्वारनक्षत्रयोगतः ॥ ३९ ॥ प्रधानद्वययोगेनपारणायोगतःक्वचित् ॥ जन्माष्टम्यांतुसंदेहेत्रिपक्षेतुपराभवेत् ॥४०॥
अष्टम्यंतेपारणंस्याद्यदियामत्रयात्पुरा ॥ समाप्येततदूर्ध्वंचेदष्टम्युषसिपारणा ॥ ४१ ॥ व्रतंपिठोरीसंज्ञामामध्या
ह्नव्यापिनीशुभा ॥ वृषभाणांपूजनेतुअमासायंतनीभवेत् ॥ ४२ ॥ दर्भाणांसंचयेचैवसंगवःकालईरितः ॥ त्रिंश
त्पुण्याःपूर्वनाड्यःकर्कसंक्रमणेरवेः ॥ ४३ ॥ पुण्याःषोडशनाड्यस्तुसिंहेपूर्वाःपराअपि ॥ केचिदिच्छंतिमुनयःपूर्वा
एवतुषोडश ॥ ४४ ॥ अगस्त्यार्घ्यस्यकालस्तुव्रतएवप्रकीर्तितः ॥ अयंतेकथितोवत्सकर्मणांकालनिर्णयः॥४५॥
यइदंशृणुतेऽध्यायंयश्चापिपरिकीर्तयेत् ॥ नभोमासिकृतानांसव्रतानांलभतेफलम् ॥ ४६ ॥ ॥ इतिश्रीस्कंदपुराणे
श्रावणमासमाहात्म्येईश्वरसनत्कुमारसंवादेव्रतनिर्णयकालनिर्णयकथनंनामएकोनत्रिंशोऽध्यायः ॥२९॥ ॥छ॥
॥ ईश्वरउवाच ॥ ॥ कियत्कियत्तेकथितंमाहात्म्यंश्रावणस्यहि ॥ सर्ववर्णयितुंशक्यंनालंवर्षशतैरपि ॥ १ ॥ प्रियेयं ॥६१॥
ममकल्याणिहुत्वादक्षाध्वरेतनुम् ॥ हिमाचलसुताजातातेनेयंयोजितामया ॥ २ ॥ सेवनेश्रावणेमासितेनमेप्रियकृ

न्नभः ॥ नातिशीतोनातिचोष्णःश्रावणेमासिभूपतिः ॥ ३ ॥उद्धूलयित्वास्वतनुंसर्वांश्रौतेनभस्मना ॥ श्वेतेनाथजला
द्रेंणात्रिपुंड्रान्द्वादशांश्चरेत् ॥ ४ ॥ भालेवक्षसिनाभौचबाह्वोःकूर्परयोस्तथा ॥ मणिबंधद्वयेचैवकंठेमूर्धनिपृष्ठके ॥ ५॥
मानस्तोकेतिमंत्रेणसद्योजातादिमंत्रतः ॥ षडक्षरेणमंत्रेणभस्मनाशोभयेत्तनुम् ॥ ६ ॥ धारयेच्चैवरुद्राक्षानष्टाधिकश
तन्तनौ ॥ द्वात्रिंशद्धारयेत्कंठेमूर्ध्निद्वाविंशतिस्तथा ॥ ७ ॥ कर्णद्वयेद्वादशैवचतुर्विंशत्करद्वये ॥ अष्टाष्टभुजयोर्भाले
एकमेकंशिखाग्रगम् ॥ ८ ॥ एवंकृत्वातुमामर्च्यजपेत्पंचाक्षरंमनुम् ॥ श्रावणेमासिविप्रेंद्रसोहमेवनसंशयः ॥ ९ ॥
ज्ञात्वेमंमत्प्रियंमासंममतोषायकेशवः ॥ कृष्णाष्टमीचतत्रापिममप्रियतरातिथिः ॥ १० ॥ देवक्याजठरात्तस्मिन्दि
नेप्रादुरभूद्धरिः ॥ एतत्तेकथितंलेशात्किमन्यच्छ्रोतुमिच्छसि ॥ ११ ॥ सनत्कुमारउवाच ॥ ॥ यद्यत्कृतंपार्वतीशन
भोमासित्वयेरितम् ॥ आनंदाब्धौनिमग्नत्वाद्धहुत्वाच्चावधारणा ॥ १२ ॥नस्थिताक्रमशोनाथब्रूहिसर्वंयथातथा ॥ श्रु
त्वाचाव्यवधानेनधारयिष्यामिभक्तितः॥ १३॥ईश्वरउवाच॥ ॥शृणुष्वावहितोभूत्वाअनुक्रमणिकांशुभां॥आदौप्रश्नः
शौनकस्यततःसूतस्यचोत्तरम् ॥ १४ ॥श्रोतुर्गुणास्तवप्रश्नानिरुक्तिःश्रावणस्यच ॥ तस्यस्तुतिःपुनःप्रश्नस्तवविस्त
रशोमुने ॥ १५ ॥ ममस्तुतिस्त्वत्कृताचनामनिर्वचनादिना ॥ भूयोममोत्तरंतत्रउद्देशःक्रमतोखिलम् ॥ १६ ॥ विशे

श्रा०मा० षतस्तवप्रश्नस्ततोनक्तव्रतेविधिः ॥ रुद्राभिषेककथनंलक्षपूजाविधिस्ततः ॥ १७ ॥ दीपदानंपरित्यागःकस्यचित्प्रि अ०
॥ ९२ ॥ यवस्तुनः ॥ फलरुद्राभिषेकेणतथापंचामृतेनच ॥ १८ ॥ फलंभूशयनस्यापितथामौनव्रतस्यच ॥ धारणापारणा ३०
चैवततोमासोपवासने ॥ १९ ॥ सोमाख्यानेततोलक्षरुद्रवर्तिविधिःस्मृतः ॥ कोटिलिंगविधानंचव्रतंचानौदनाभि
धम् ॥ २० ॥ हविष्याशनमप्यत्रपत्रावल्यांचभोजनम् ॥ शाकत्यागोभूशयनंप्रातःस्नानंदमःशमः ॥ २१ ॥
स्फटिकादिषुलिंगेषुअजाजपफलंततः ॥ प्रदक्षिणानमस्कारान्वेदपारायणंतथा ॥ २२ ॥ विधिःपुरुषसूक्त
स्यग्रहयज्ञविधिस्ततः ॥ रविचंद्रकुजानांचक्रमशोव्रतविस्तरः ॥ २३ ॥ बुधगुर्वोर्व्रतंपश्चाच्छुक्रेजीवंतिका
व्रतम् ॥ शनौनृसिंहस्यशनेरनिलाश्वत्थयोस्तथा ॥ २४ ॥ रोटकाव्रतमाहात्म्यंततऔदुंबरव्रतम् ॥ स्वर्णगौरीव्रतं
पश्चाद्दूर्वागणपतिव्रतम् ॥ २५ ॥ नागव्रतंचपंचम्यांषष्ठ्यांसूपौदनव्रतम् ॥ शीतलाख्यंव्रतंदेव्याःपवित्रारोपणंत
तः ॥ २६ ॥ दुर्गाकुमारीपूजाचआशाव्रतमतःपरम् ॥ उभयैकादशीपश्चात्पवित्रारोपणंहरेः॥२७॥ अनंगस्यत्रयो
दश्यांततःशंभोःपवित्रकम् ॥ उपाकर्मोत्सर्जनेचश्रवणाकर्मचैवहि ॥ २८ ॥ ततःसर्पबलिर्वाजिग्रीवजन्ममहोत्सवः॥ ॥ ९२ ॥
सभादीपस्तथारक्षाबंधःसंकटनाशने ॥ २९ ॥ व्रतंततःकृष्णजन्माष्टमीव्रतकथानकम् ॥ व्रतंपीठोरसंज्ञंतुपोलासं

ज्ञेवृषव्रतम् ॥ ३० ॥ दर्भाणांसंग्रहश्चैवनदीनांसरजस्कता ॥ सिंहेगोप्रसवेशांतिःकर्कसिंहनभेषुच ॥ ३१ ॥ दाना
निस्नानमाहात्म्यंमाहात्म्यश्रवणंतथा ॥ ततोवाचकपूजाचअगस्त्यार्घ्यंततःपरम् ॥ ३२ ॥ कर्मणांचव्रतानांचकाल
निर्णयईरितः ॥ एतन्मासिकृतानांसव्रतानांफलभाग्भवेत् ॥ ३३ ॥ सनत्कुमारहृदयेधारयस्वक्रमंशुभम् ॥ ३४ ॥
यइमंशृणुतेऽध्यायंमाहात्म्यंश्रावणस्ययत् ॥ तत्फलंसमवाप्नोतिव्रतानांचैवयत्फलम् ॥ ३५ ॥ किंबहूक्तेनविप्रर्षेश्राव
णोविहितंतुयत् ॥ तस्यचैकस्यकर्तापिममप्रियतरोभवेत् ॥ ३६ ॥ सूतउवाच ॥ ॥ सनत्कुमारःपीत्वैवंशिववाक्या
मृतंपरम् ॥ श्रुतिद्वाराचापमोदंकृतकृत्योबभूवह ॥ ३७ ॥ नभोमासंस्तुवञ्शंभुंस्मरन्सहृदयोशिवम् ॥ शंकरेणा
भ्यनुज्ञातोययौदेवर्षिसत्तमः ॥ ३८ ॥ इदंरहस्यंपरमंनाख्येयंयस्यकस्यचित् ॥ भवतोयोग्यतांदृष्ट्वामयैतत्कथितंप्रभो
॥ ३९ ॥ इतिश्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्वरसनत्कुमारसंवादेअनुक्रमणिकाकथनंनामत्रिंशोऽध्यायः ॥ ३० ॥
इदंश्रावणमासमाहात्म्यंसमाप्तम् ॥ ॥ छ ॥ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥

इदं श्रीभविष्योत्तरपुराणान्तर्गतं श्रावणमासमाहात्म्यं श्रीकृष्णदासात्मजेन खेमराजेन
स्वकीये श्रीवेंकटेश्वरयन्त्रालयेङ्कितम् । शके १८१५ संवत् १९५०

